श्रीगणेशाय नमः।

# तत्त्वचिन्तामणौ

## ईश्वरानुमानम्।

एवमनुमाने[1] निरूपिते तस्माज्जगन्निर्मातृपुरुषधौरेयसिद्धिः, क्षित्यादौ कार्यत्वेन घटवत्सकर्तृकत्वानुमानात्[2]। ननु क्षित्यादि प्रत्येकं न पक्षः, तस्य

---

## ईश्वरानुमानालोकः।

'जगदि'ति कार्य्यजातमित्यर्थः, 'तस्ये'ति, प्रतिज्ञाकाले स्वस्वपदेन तावदभिधानस्याशक्यत्वादित्युपलक्षणं, तावतामनन्तत्वादभिधानस्यानेकसमयसाध्यतया तावत्पर्य्यन्तानुविधेय-स्थैयः-प्रतिवादिना-

---

(१) ईश्वरानुमानप्रकरणस्य मथुरानाथकृतव्याख्याया दुष्प्राप्यत्वेन व्याख्यासङ्कारं विना दुर्बोधत्वेन चातिप्रामाणिक-जयदेवमिश्रकृताऽऽलोकाख्यव्याख्यया सहितं तादृशप्रकरणं मुद्रितमिति।

(२) क्षितिः सकर्तृका कार्य्यत्वात् घटवत् इत्यनुमानादित्यर्थः।

स्वशब्देनाभिधातुमशक्यत्वात्। नापि मिलितं, एकरूपाभावात्[१]। अत एव सकर्तृकत्वासकर्तृकत्वविचारारम्भकसंशयविषयः तथाभूतविवादविषयो वा न पक्षः, एकरूपाभावेन तयोस्तावत्सुग्रहीतुमशक्यत्वाद्वादिनोर्निश्चितत्वेन संशयाभावात्। न च वाद्यनुमानयोस्तुल्यबलत्वेन मध्यस्थस्य संशयः, अनुमानाभ्यां तस्य संशयो मध्यस्थप्रश्नानन्तरञ्चानुमानमित्यन्योन्याश्रयात् घटेऽपि कदाचित्तयोः सम्भवात् प्रत्येकं संशये विवादास्पदत्वेनानुमानेऽर्थान्तरतापत्तेश्च। न च शरीरापेक्षेण कर्त्रा यन्न कृतं शरीराजन्यं जन्यं वा पक्षः, जन्यात्मविशेषगुण-शब्द-फुत्कार-सर्गाद्यकालीनवेद घटादिलिप्यादिसम्प्रदायानामीश्वरमात्रकर्तृकाणामसंग्रहात्[२]

---

मात्काङ्क्षाघत्वाघभत्राचेत्यपि द्रष्टव्यं[१]। 'मिलितमिति एकपक्षतावच्छेदकावच्छिन्नमित्यर्थः। ननु संशय-विवादौ विशेषणतयोपलक्षणतया वा पक्षतावच्छेदकौ तत्र नाद्य इत्याह, 'वादिनोरिति, नान्त्य इत्याह, 'घटेऽपीति, तथाचांशतः सिद्धसाधनमिति भावः।

---

(१) अनुगतपक्षतावच्छेदकाभावादित्यर्थः।

(२) एतेषां शरीरजन्यत्वनियमेन शरीराजन्यत्वरूपेण सङ्ग्रहीतुमशक्यत्वात्।

(३) अनुविधेयः दाम्भादिः स्थेयान् मध्यस्थः।



असिद्धेश्च[1] अदृष्टद्वारा शरीरिणोऽपि क्षित्यादिकर्तृत्वात्[2]। नापि जन्यकृत्यजन्यं जन्यमुभयसिद्धकृतिजन्यान्यद्वा जन्यं[3] पक्षः, क्षित्यादीनामदृष्टद्वारा जन्यकृतिजन्यत्वात्[4]। नाप्यदृष्टजनककृत्यजन्यं जन्यकृतिसाक्षादजन्यं वा[5] जन्यं पक्षः, ईश्वरकृतेरदृष्टजनकत्वेन क्षित्यादौ तदभावात्[6]। घटादावप्येवं पक्षत्वेनांशतः

---

'असिद्धेश्चेति असमसिद्धेरित्यर्थः। द्वितीयलक्षणे दोषमाह, 'घटादाविति,

---

(१) शरीराजन्यत्वस्याप्रसिद्धा पक्षासिद्धेरित्यर्थः।

(२) जन्यमात्रं प्रति अदृष्टस्य हेतुत्वादिति भावः।

(३) सर्गाद्यकालीनक्षित्यङ्कुरादीनामेव उभयसिद्धकृतिजन्यान्यत्वेन पक्षतया न सिद्धसाधनमिति भावः।

(४) जन्यमात्रस्य अदृष्टजन्यतया सर्गाद्यकालीनक्षित्यङ्कुरादीनामपि कस्यचिददृष्टजन्यतया अदृष्टद्वारा उभयसिद्धकृतिजन्यत्वनियमेन तादृशकृतिजन्यान्यत्वाप्रसिद्धा पक्षाप्रसिद्धिरिति भावः।

(५) जन्यकृतिसाक्षादजन्यत्वं जन्यकृतिविशिष्टं यद्यत् तदन्यत्वं वैशिष्ट्यञ्च स्वजन्यादृष्टजन्यत्व-स्वजन्यत्वोभयसम्बन्धेन।

(६) तथाच जन्यमात्रं प्रति ईश्वरकृतेः कारणतया अदृष्टं प्रत्यपि कारणतानियमेन ईश्वरकृतिमात्रजन्यस्यापि सर्गाद्यकालीनक्षित्यादेः अदृष्टजनककृत्यजन्यत्वाभावात् पक्षासिद्धिरिति भावः। समवायसम्बन्धावच्छिन्नजनकत्वविवक्षायां तु ईश्वरकृतौ समवायावच्छिन्नादृष्टजनकत्वाभावान्न दोष इति विभावनीयं।

सिद्धसाधनात्[१]। न च क्षितिरेव पक्षः, अङ्कुरेण सन्दिग्धानैकान्तिकत्वात्[२]। न च निश्चितविपक्षे हेतुसन्देहात्स इति वाच्यम्। हेतौ साध्याभाववद्गामित्वसंशयस्य दूषकत्वात्। स च साध्याभाववति हेतुसन्देहाद्धेतुमति साध्याभावसन्देहाद्वा उभयथापि दोषः। न चैवं पक्षेऽपि तत् स्यात्, अनुमानमात्रोच्छेदकत्वेनेतरत्र[३] तस्य दूषकत्वात्। अङ्कुरे हेतोरनिश्चयेन सन्दिग्धानैकान्तिकम् तन्निश्चये च साध्यसन्देहवति साध्यानुमितिरेव पक्षवत्सामग्रीसत्त्वात्, अत एवाङ्कुरः पक्षसम इति चेत्, न, तस्यापक्षत्वेन हेतोः पक्षधर्मताविरहेण स्थापनानुमानाविषयत्वात्। तदा तस्यापि पक्षत्वे प्रतिज्ञान्तरापत्तिः। अनुमानान्तराधीनतत्साध्यानुमित्यनन्तरञ्च पक्षेऽनुमितावितरेतराश्रयात्नैकमप्यनुमानं स्यात् तत्रापि क्षित्यादौ सन्दिग्धानैकान्तात् क्षितेर्विवादविषयत्वे अङ्कुरे प्रथमं साध्यसाधनेऽर्था-

---

(१) घटादेः चैत्रादिद्वारा क्षितिजन्यत्वेन उभयोभयसम्बन्धेन क्षितिविशिष्टान्यत्वादंशतः सिद्धसाधनमिति भावः। क्षितिविशिष्टान्यत्वघटकवैशिष्ट्यं यदि स्वजन्यत्वस्वाजन्यत्व-स्वजन्यत्वोभयसंसर्गरूपं विवक्ष्यते तदा नांशतः सिद्धसाधनमिति विभावनीयं।

(२) व्यभिचारसन्देहादित्यर्थः।

(३) तदितरत्रेति ख०।

न्तराच। किञ्चैवमेकैकोपादानाभिज्ञसिद्धावपि नेश्वरसिद्धिः। नापि सर्गाद्यकालीनं द्व्यणुकं पक्षः, परम्प्रति सर्गाद्यसिद्धेः। किञ्च सकर्तृकत्वं न तावत्कृतिमत्सहभावः कृतिमज्जन्यत्वं वा, अस्मदादिना सिद्धसाधनात्। उपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्यत्वं तदिति चेत्। न। उपादानगोचरत्वं यदि यत्किञ्चिदुपादानगोचरत्वं तदा अस्मदादिनार्थान्तरत्वम्[१] ज्ञानादिजन्यत्वमपि[२] विवक्षितम्। न च घटोपादानगोचरापरोक्षज्ञानादीनां क्षितिजनकत्वं सम्भवति, व्यभिचारादिति चेत्। न। क्षितिजनकादृष्टजनकज्ञानादीनामुपादानविषयत्वनियमेनादृष्टद्वारा तैरेव

---

'सर्गाद्येति यद्यपि द्व्यणुकमात्रकर्तृसिद्धौवेश्वरसिद्ध्या पक्षविशेषणमनुचितं, तथापि इदानींद्व्यणुकमस्मदादिनैव योगजज्ञानवता सकर्तृकं स्यादित्यर्थान्तरापत्त्या पक्षविशेषणं दत्तमित्याशयः। पक्षं विकल्प्य साध्यं विकल्पयितुं पृच्छति, 'किञ्चेति, 'व्यभिचारादिति इदानीं घटोपादानगोचरज्ञाने सत्यपि क्षित्यनुत्पादेन व्यभिचारात्। यद्वा क्षितेः प्राच्यत्वेनेदानीन्तनघटज्ञानस्य

---

(१) अस्मदादीनामुपादानज्ञानमादाय प्रकृतानाकाङ्क्षिताभिधानमिति भावः।

(२) ज्ञानादीनामपि जनकत्वमिति शे॰।

सिद्धसाधनात्। न च साक्षात्तज्जन्यत्वं विवक्षितम्, तद्धि न कृतिजन्याजन्यत्वे सति कृतिजन्यत्वम् स्वजनककृत्यव्यवहितोत्तरक्षणवर्त्तित्वं वा घटदृष्टान्तस्य साध्यविकलतापत्तेः(१) घटादौ कुलालादिकर्त्तृकत्वाभावप्रसङ्गाच्च। न च शरीरक्रिया दृष्टान्तः(२) इति वाच्यम्। घटेनानैकान्तिकत्वात्(३) चेष्टात्वस्योपाधित्वाच्च(४)। नापि क्षित्याद्युपादानगोचरत्वं विवक्षितम्, अप्रसिद्धेः। न चोपादानशब्दस्य सम्बन्धिशब्दत्वेन घट-क्षित्यादिपदसमभिव्याहारे तत्तदुपादानबोधकत्वं चैत्रो मातृभक्तः(५) मैत्रवदिति वाच्यम्। शाब्दे हि बोधे तथा(६)।

(१) सकर्त्तृकत्वपदस्य यदि कृतिजन्याजन्यत्वे सति कृतिजन्यत्वमर्थः तदा घटादेः कृतिजन्यचेष्टाजन्यत्वेन साध्यविरहितापत्तिरिति भावः।

(२) अन्यत्र चेष्टाद्वारा कृतिजन्यत्वेऽपि शरीरक्रियारूपायां चेष्टायां कृतेः साक्षात् जनकत्वेन तस्या एव दृष्टान्तत्वं सम्भवमिति तात्पर्यं।

(३) निरुक्तसकर्त्तृकत्वस्य चेष्टायामेव सत्त्वात् तादृशसाध्यशून्ये घटादौ कार्यत्वहेतोर्वर्त्तमानत्वेन व्यभिचार इत्यभिप्रायः।

(४) तथाच निरुक्तसकर्त्तृकत्वस्य चेष्टायामेव सत्त्वात् यत्र यत्र सकर्त्तृकत्वं तत्र तत्र चेष्टात्वमिति चेष्टात्वरूपोपाधेः साध्यव्यापकत्वं, कार्यत्वरूपहेतोः घटादौ सत्त्वात् तत्र चेष्टात्वाभावेन चेष्टात्वरूपोपाधेः साधनाव्यापकत्वमित्युपाधित्वमिति भावः।

(५) चैत्रो मातृभक्तः इत्यादौ यथा चैत्रादिपदसमभिव्याहारेण मातृपदस्य चैत्रमातृबोधकत्वं तथा घट-क्षित्यादिपदसमभिव्याहारेण उपादानपदस्य घट-क्षित्याद्युपादानबोधकत्वमिति।

(६) न त्वनुमानादाविति शेषः।

न चात्र शब्दः प्रमाणम्, वादिनोरनाप्तत्वात्। अनुमाने त्वनुगतेन व्यापकत्वग्रहे तेन रूपेण व्यापकसिद्धिः तच्चोपादानत्वमेवेति कथं नार्थान्तरम्[१]। किञ्चैवं घटादावपि तत्तदुपादानत्वेनैवोपस्थित्या सामान्येन रूपेण कुत्राप्यनुपस्थितेर्व्याप्तिरेव न गृह्येत। अपि च सामान्यलक्षणया ज्ञानलक्षणया योगजधर्म्मरूपया प्रत्यासत्त्या उपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमता अस्मदादिना सिद्धसाधनम् तेषां[२] क्षित्यव्यवहितपूर्वसमयासत्त्वेऽपि तद्वतः सत्त्वात् अदृष्टद्वारा तेषामपि जनकत्वसम्भवात् ज्ञानादिसाक्षाज्जन्यत्वस्य च निरस्तत्वात्।

---

तदा अभावेन नियतपूर्ववर्त्तित्वाभावादित्यर्थः। 'अदृष्टद्वारेति, यद्यपि दोषाभावाददृष्टद्वारकता योगिज्ञानस्य बाधिता, तथाप्येतदनुमानबलादेव "धर्मिकल्पनात इति न्यायात्[१] दोषं विनापि तस्यादृष्टजनकत्वं स्यादित्यर्थान्तरापादानमेवेदं द्रष्टव्यं।

---

(१) उपादानज्ञानजन्यत्वत्वेन उपादानज्ञानजन्यत्वे कार्य्यत्वव्यापकत्वग्रहे उपादानज्ञानजन्यत्वत्वेन उपादानज्ञानजन्यत्वस्य सिद्धिः, न तु क्षित्युपादानज्ञानजन्यत्वस्य इत्यर्थान्तरमिति भावः।

(२) उपादानज्ञानादीनामित्यर्थः।

(३) धर्म्मिकल्पनातो हि धर्म्मकल्पना लघीयसीति न्यायादित्यर्थः।

अथ [1]योगजधर्म्माजन्यसविकल्पकाजन्यसामान्यलक्षणप्रत्यासत्त्यजन्यजन्योपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमदजन्यं जन्यं पक्षः[2] योगजधर्म्माजन्यसविकल्पकाजन्यसामान्यलक्षणप्रत्यासत्त्यजन्योपादानगोचरज्ञान-चिकीर्षा-कृतिमज्जन्यमिति साध्यम्। यद्वा अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यजन्यज्ञानादिमदजन्यं[3] जन्यमनागतगोचरसाक्षात्कारजनक-

---

'अथ योगजेति, अत्रोभयत्र पक्षविशेषणमप्रसिद्धिवारणाय,

---

(१) अत्र क्षित्यङ्कुरादौ अदृष्टद्वारा योगिना योगजधर्म्मजन्योपादानज्ञानजन्यचिकीर्षा-कृतिमत्त्वेन पक्षाप्रसिद्धिवारणाय योगजधर्म्माजन्येति विशेषणं। अदृष्टद्वारा अनुमित्यात्मकोपादानज्ञानजन्यत्वमादायासिद्धिवारणाय सविकल्पकाजन्येति विशेषणं, अनुमित्यात्मकज्ञानस्य सविकल्पकत्वानियतजन्यत्वेन वारणं, अदृष्टद्वारा सामान्यलक्षणप्रत्यासत्तिजन्यातीन्द्रियोपादानविषयकज्ञानजन्यत्वमादायासिद्धिवारणाय सामान्यप्रत्यासत्त्यजन्येति विशेषणं।

(२) अत्र जन्यत्वं उपादानज्ञाने चिकीर्षायां कृतौ च विशेषणं, जन्यत्वस्याविशेषणत्वे जन्यमात्रस्यैव नित्यज्ञान-नित्यचिकीर्षा-नित्यकृतिजन्यत्वेन सामान्यतस्तदजन्यजन्याप्रसिद्ध्या पक्षाप्रसिद्धिप्रसङ्ग'। अनयैव रीत्या सिद्धसाधनवारणाय साध्यांशे उक्तविशेषणत्रयस्य सार्थक्यं।

(३) योगजधर्म्मस्य सामान्यलक्षणस्य च अनागतगोचरसाक्षात्कारजनकत्वेन वारणं, अत्र प्रत्यासत्त्यजन्यत्वमित्यत्र जन्यत्वं साक्षात्परम्परासाधारणं ग्राह्यं तेनानुमितेः परम्परया सामान्यप्रत्यासत्तिजन्यत्वेन वारणमिति ध्येयं।

प्रत्यासत्त्यजन्योपादानगोचरापरोक्षज्ञानादिमज्जन्यमिति साध्यम्, ज्ञानाव्यवहितोत्तरसमयवर्त्तीच्छा-तदव्यवहितोत्तरसमयवर्तिकृतीनां(१) जनकत्वं विवक्षितं न तु ज्ञानादीनां यौगपद्यम् पौर्वापर्यं वा अतो न साध्याप्रसिद्धिर्न वा क्षित्यादौ बाध इति। मैवम्। योगजधर्मसामान्यज्ञानरूपप्रत्यासत्तीनामनागतगोचरसाक्षात्कारस्य तज्जनकप्रत्यासत्तीनाञ्च परस्याप्रसिद्धतया तदजन्यस्य साक्षात्कारस्याप्यप्रसिद्धत्वेन पक्ष-साध्ययोर्विशेषणासिद्ध्या परं प्रत्याश्रयासिद्धेः साध्याप्रसिद्धेश्च। तत्सिद्धौ वा पक्षे तदजन्यत्वासिद्धेः क्षितिजनकादृष्टजनककृति-चिकीर्षा-साक्षात्काराणां योगजधर्माद्यजन्यानामदृष्टद्वारा क्षितिजनकत्वेन सिद्धसाधनात्। न च

---

साध्यविशेषणञ्च सिद्धसाधनवारणाय। तच ज्ञानादीनामुभयत्रोपलक्षणत्वं विशेषणत्वं वेति विकल्पं मनसि कृत्य नाद्य इत्याह, 'योगजेति, सिद्धौ वा तदाश्रयस्यादृष्टद्वारा जनकत्वात् पक्षे तदजन्यत्वासिद्धेः, इदञ्चोपलक्षणं साध्ये सिद्धसाधनाच्चेत्यपि द्रष्टव्यं। यथाश्रुते तु तत्सिद्धावपि योगजज्ञानस्य दोषाभावाददृष्टाभावाददृष्टाद्वारकतया तदजन्यत्वासिद्धेरित्यादेर्विरोधापातादिति ध्येयं। नान्त्य इत्याह, 'क्षितिजनकेति, व्याश्रितपक्षजन्यत्वेनेत्यनन्तरं चकारः पूरणीयः, ते-

---

(१) तदव्यवहितोत्तरक्षणवर्त्तिकृतीनामिति ख०।

तादृशसाक्षाज्जन्यत्वं विवक्षितम्, घटादिदृष्टान्ते तदसम्भवात्, दृष्टान्ते घटादौ जनकेष्टसाधनताज्ञानस्यानुमितित्वेन जन्यसविकल्पकव्याप्तिग्रहजन्यत्वेन साध्याप्रसिद्धेश्च ।

ननु व्याप्तिबलेन साध्यं सिध्यति व्याप्तिश्च यत्र यत्र कार्य्यत्वं तत्र तदुपादानाभिज्ञजन्यत्वम्[1] इतिरूपा न तु यद्यत्कार्य्यं तद्यत्किञ्चिदुपादानाभिज्ञजन्यमिति । एवञ्च यत्र यत्र कार्य्यत्वं तत्र तदुपादानाभिज्ञजन्यत्वमिति विशिष्य व्याप्त्या क्षित्यादौ कार्य्यत्वं क्षित्याद्युपादानाभिज्ञजन्यत्वमेव साधयत्यतो न सिद्धसाधनमिति चेत्, न, घटे पटे च कार्य्यत्वस्य व्याप्तिग्रहः किं प्रत्येकं घटोपादानाद्यभिज्ञजन्यत्वेन, तत्तदुपादानाभिज्ञजन्यत्वेन, उपादानाभिज्ञजन्यत्वेन वा, आद्ये घटोपादानाभिज्ञजन्यत्वादौ कार्य्यत्वस्य व्यभिचार एव । द्वितीये त्वननुगततत्तच्छब्दाभिधेयघटाद्युपादानगतानुगतरूपाभावात्

---

नोभयविशेषणविरहादुभयविशिष्टज्ञानजन्यत्वरूपसाध्याप्रसिद्धेरित्यर्थो लभ्यते अन्यथानुमितेः पारोक्ष्यनियमेनापरोक्षत्वविशिष्टसाध्यं अत एवाप्रसिद्धं किं तदर्थं सविकल्पकव्याप्तिग्रहजन्यत्वरूपविशेषणोपवर्णनं

---

(१) तदुपादानाभिज्ञकर्तृकत्वमिति ख० ।

कथं व्यापकताग्रहः, तत्तच्छब्दस्य स्वभावात् समभिव्याहृतपरतया नायं दोष इति चेत्। न। अनुमाने शब्दस्वभावोपन्यासस्याप्रयोजकत्वात्। अत एवेदानीं देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहासत्त्वात्, विद्यमानत्वे सति यो यदा यत्र नास्ति स तदा तदतिरिक्ते देशेऽस्ति यथाहमेव बहिरसन् गृहमध्ये तिष्ठामीत्यत्र पक्ष-दृष्टान्तसाधारणयत्त्व-तत्त्वयोरनुगतयोरभावान्नान्वयि, किन्तु व्यतिरेकीत्युक्तम्। तृतीये सिद्धसाधनमेव।

अथ सर्गाद्यकालीनद्व्यणुकं ज्ञानेच्छा-कृतिसमानकालीनसामग्रीजन्यम् कार्य्यत्वात् घटवत् अदृष्टसामग्रीजन्यत्वेऽदृष्टत्वापत्तिरिति चेत्। न। परम्प्रति-सर्गाद्यसिद्धेः। ज्ञानादीनां सिद्धावपि द्व्यणुकाजनकत्वात् उदासीनसिद्धावप्रयोजकत्वाच्च। एतेन सर्गाद्यकालीनं द्व्यणुकं द्व्यणुकासमवायिकारणसमानकालीनकृतिजन्यमिति निरस्तम्। द्व्यणुकासमवायिकारण-

---

तच चेदं दूषणं न लगतीति स्मर्तव्यं। ननु सर्गाद्यजन्यत्वेन न पक्षता किन्तु द्व्यणुकत्वावच्छेदेनैव परन्त्वस्मदादिनापि सिद्धसाधनमतस्तदंशे पक्षधर्मताबलादीश्वरसिद्धिः पक्षतावच्छेदकैक्याच्च नांशतः सिद्धसाधनमित्यस्वरसाद्दोषान्तरमाह, 'उदासीनेति, 'एतेनेति

समानकालीनज्ञातित्वेन गौरवाप्रयोजकत्वाभ्यामजनकत्वात्। किञ्च कार्य्यत्वं न तावद्योगोपस्थितकृत्यर्हत्वम्, असिद्धेः। नापि पूर्वकालासत्त्वे सति उत्तरकालसम्बन्धित्वं, तत्तत्पूर्वकालत्वस्याननुगतत्वात् सकलपूर्वकालस्याप्रसिद्धेः[१]। नापि कादाचित्कत्वम्[२], प्रागभावेनानैकान्तिकत्वात्[३]। नापि प्रागभावप्रतियोगित्वं, ध्वंसेनानैकान्तिकत्वात्[४]। नापि सत्त्वे सति तत्त्वम्[५], सत्ताजातेः परम्मति असिद्धेः स्वरूपसत्त्वस्य च ध्वंसेऽपि सत्त्वात्। यत्त्वयं घटः एतद्घटजनकानि-

---

अप्रयोजकत्वेनेत्यर्थः। हेत्वर्थे पृच्छति, 'किञ्चेति, 'सत्ताजातेरिति।

---

(१) पूर्वत्वस्य प्रागभावघटितत्वात् सर्वेषां वस्तूनां प्रागभावाधिकरणकालाप्रसिद्धेरित्यर्थः।

(२) कादाचित्कत्वस्य किञ्चित्कालावृत्तित्वे सति किञ्चित्कालवृत्तित्वं, न तु किञ्चित्कालावृत्तित्वे सति उत्पत्तिमत्त्वं, तथा सति प्रागभावेनानैकान्तिकत्वादित्युपरस्यासङ्गतेः।

(३) सकर्तृकत्वरूपसाध्यशून्ये प्रागभावे कादाचित्कत्वरूपकार्यत्वहेतोः सत्त्वात् व्यभिचार इति भावः।

(४) कपालादिसमवायिकारणनाशजन्ये घटादिनाशे ध्वंसे सकर्तृकत्वाभावात् व्यभिचार इत्यभिप्रायः, भावत्वे सति प्रागभावप्रतियोगित्वं यदि हेतुः तर्हि नासिद्धिर्न वाऽनैकान्तिकत्वमिति विभावनीयम्।

(५) प्रागभावप्रतियोगित्वमित्यर्थः।

त्यज्ञान-चिकीर्षा-कृत्यतिरिक्तज्ञानादिजन्यः कार्य्यत्वात् पटवदित्यादि । तन्न । विपक्षबाधकाभावेनाप्रयोजकत्वात्[1] अन्यथा[2] अयं घटः एतद्घटजनकानित्यादृष्टातिरिक्तादृष्टजन्यः कार्य्यत्वात् पटवत्, एतौ सुख-दुःखसाक्षात्कारौ एतज्जनकानित्यसुख-दुःखातिरिक्त-सुख दुःखसाध्यौ सुख-दुःखसाक्षात्कारत्वात् इत्यादिना नित्यधर्म्माधर्म्म-सुख-दुःखाश्रयस्यापि सिद्धिप्रसङ्गात् । अयं घटः स्वजनकानित्यज्ञानाद्यतिरिक्तज्ञानाद्यजन्यः[3] घटत्वात् अपरघटवदित्यादिना सत्प्रतिपक्षाच्च ।

केचित्तु दृश्यते तावदभिमतग्राहिणीन्द्रिये मनोनिवेशयतः पुंसोमनःक्रियानुकूलो यत्नः, तथाच सर्गाद्यकालीनशरीरजन्यज्ञानध्वंसानाधारकालाधारज्ञानज-

---

यद्यपि नेदं दूषणं प्रसाध्याङ्गकानुमानस्य सर्व्वसम्मतत्वात्, तथापि प्रसाध्याङ्गके गौरवादप्रसाध्याङ्गकमेवानुमानमुच्यतामिति मनसि-

---

(१) विपक्षस्य व्यभिचारस्य बाधकाभावेन बाधनिर्णायकाभावेन अनुकूलतर्कशून्यत्वादित्यर्थः ।

(२) साधकाभावमुक्त्वा बाधकमप्याह, अन्यथेति ।

(३) नित्यज्ञानानङ्गीकर्त्तॄणां परेषां मते घटस्य स्वजनकानित्यज्ञानाद्यतिरिक्तज्ञानाद्यजन्यत्वं सम्भवतीति भावः ।

नकात्ममनोयोगजनिका(१) मनःक्रिया तन्मनोगोचरप्रयत्नानाधारतन्मनोगोचरप्रयत्न-तद्व्याप्येतरसकलकारणाधारकालानन्तरकालानाधारा तन्मनःक्रियात्वात् सम्मततन्मनःक्रियावत् अर्थात् प्रयत्नाधारकालानन्तरकालाधारा सा क्रिया सिध्यतीत्याहुः(२)। तन्न, सर्गाद्यकाले ज्ञानजनकमनःसंयोगजनकक्रियायां मानाभावः पूर्वक्रिययैव संयोगसम्भवात् ईश्वरवादिनां

---

इत्येतदुक्तं। वस्तुतः सत्तावत्वं तत्समवाय इति व्यर्थविशेषणत्वादिदं साधनं, अत एव जातिमत्त्वमपि न विशेष्यं, न हि तथापि परमत्वासिद्धत्वमिति भावः। 'पूर्वक्रिययैवे'त्युपलक्षणं कदाचित् पूर्वसंयोगेनापीत्यपि द्रष्टव्यं, प्रलये कर्मवत्गुणस्यापि सम्भवात्(३)। न च प्रलयकालीनसंयोगस्य शरीरानवच्छिन्नोत्पत्तिकतया न ज्ञानजनकत्वमिति वाच्यं। शरीरानवच्छिन्नोत्पत्तिकत्वेऽपि शरी-

---

(१) सर्गाद्यकालीनं यच्छरीरं तज्जन्यज्ञानध्वंसानाधारकाल आधारो यस्य एवं भूतं यज्ज्ञानं तज्जनकात्ममनःसंयोगजनिका मनःक्रियेत्यर्थः।

(२) तथा च तादृशमनःक्रियात्वावच्छेदेन प्रयत्नाधारकालानन्तरकालाधारत्वसिद्धौ सर्गाद्यकालीनतन्मनःक्रियायामपि प्रयत्नाधारकालानन्तरकालाधारत्वस्य अवश्यमङ्गीकर्तव्यत्वेन सर्गाद्यकाले ईश्वरप्रयत्नातिरिक्तप्रयत्नासम्भवादीश्वरसिद्धिरिति केषाञ्चिदाशयः।

(३) जन्यद्रव्यानधिकरणकालस्य प्रलयत्वेन तत्र कर्मण इव जन्यगुणस्य सत्त्वेऽपि न प्रलयत्वव्याघात इति भावः।

तन्मनोगोचरप्रयत्नानाधारः कालोऽप्रसिद्ध एव[१] क्रियात्वस्यैव हेतुत्वे व्यर्थविशेषणत्वञ्च[२]। किञ्चैवं प्रयत्ना-

---

रावच्छिन्नतादशायां ज्ञानजनकत्वाविरोधात्। एवञ्चाश्रयासिद्धौ तात्पर्य्यं, इदमुपलक्षणं व्यभिचारोऽपि द्रष्टव्यः, नोदनादपि मनःक्रियासम्भवादिति ध्येयं। यदि चेश्वरप्रयत्नजन्यत्वान्न व्यभिचारस्तदाह, 'क्रियात्वस्येति। 'किञ्चैवमित्यापाततः, मूलयुक्तिस्तु व्यर्थविशेषणत्वं, मनोगोचरप्रयत्नाप्रसिद्धा साध्याप्रसिद्धिरपि अतीन्द्रिये प्रयत्नासम्भवादिति ध्येयं। यावता तदुत्तरकालोत्पत्तिकत्वस्य साधयितुं शक्यत्वात् तावन्मात्रसाधनमन्यथासिद्धत्वशङ्कास्कन्दितमिति तथा साध्योपन्यासादिति। अत्रोपादानपदं स्वोपादानपरं, तद्गोचरजन्यकृतिजन्यं घटादि प्रसिद्धं तदन्यत्वं पक्षतावच्छेदकं, अत उपादानपदं न स्वोपादानपरमप्रसिद्धेः, न सामान्यपरं, रूपोपादानशङ्खादिगोचरजन्यकृतिजन्यत्वेन शब्दादावव्याप्तिरित्यादिदूषणमलग्नकं भवति, अत्रोपादान-कृत्योर्मध्ये ज्ञानपदमपि प्रवेशनीयं, तेनात्मगोचरकृतिविषयसाक्षात्कारादिषु नाव्याप्तिः। यद्वा उपादानगोचरजन्यकृतित्वावच्छिन्नकारणताप्रतियोगीत्यर्थः, स्वविषयसमवेतकार्य्यं प्रत्येव तथा जनकत्वादिति नातिप्रसङ्गाप्रसिद्धी। न

---

(१) ईश्वरप्रयत्नस्य नित्यत्वेन तन्मनोगोचरेश्वरप्रयत्नस्य सर्व्वस्मिन् काले सत्त्वात् तादृशप्रयत्नानधिकरणकालासिद्धिरिति।

(२) ईश्वरवादिमते क्रियामात्रस्य यत्नवो भगवत्प्रयत्नजन्यत्वेन व्यभिचाराप्रसक्तेः हेतुशरीरे तन्मनःपदं व्यर्थम्।

नाधारकालानन्तरकालानाधारत्वं[1] अर्थात् तत्सिद्धौ मानान्तरादीश्वरसिद्धौ अर्थान्तरत्वमिति। अत्रोच्यते। अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि अदृष्टप्रागभावव्याप्यप्रागभावप्रतियो-

---

धात्मगोचरात्मदाहादिकृतिविषयसाक्षात्कारादावव्याप्तिरिति भावः। नन्वेवमदृष्टाद्वारकेति व्यर्थं तद्द्वारककृतिमादाय कल्पद्वयेऽपि दोषाप्रसङ्गादिति चेत्, अत्र कश्चित् विषभक्षणादौ मन्त्रपाठादिसाध्ये-ऽस्मदादिसाक्षात्कारे मा भूदव्याप्तिरित्येतदर्थं तदुपादानं मन्त्रपाठादि-नाऽदृष्टजननात्। तत्र विषयगोचरा कृतिरेव न किन्तु कण्ठताल्वादिगोचरेति न तदर्थं तदुपादानं अपि तु कायशरीरे यच्छरीरं रूपं उत्पन्नं तत्कालीनशरीरगोचरतपश्चरणादिकृत्या जन्यते सा च कृतिरदृष्टद्वारिकेति तद्रूपेऽव्याप्तिवारणाय तद्विशेषणमिति सम्यक्। वस्तुतस्तु अदृष्टाद्वारकत्वमात्मगुणाद्वारकत्वं तेनात्मनि निदिध्यासनादिकृतिसाध्ये आत्मसाक्षात्कारे नाव्याप्तिरिति तत्त्वं, कृतिजन्यव्यापारविषयताया एव कृतिविषयतारूपत्वादिति। यदि च तथादृष्टमेव द्वारं तदा यथाश्रुतमेवादरणीयं। अचेतनं जन्यपदं समवेतपदञ्चाकाशादौ ध्वंसे चातिव्याप्तिवारणाय, तत्पक्षतायामंशतो बाधापत्तेरिति भावः। अथादृष्टजनकत्वोक्ते ईश्वरकृतेरप्यदृष्टजनकत्वादिति तद्वारणार्थं भङ्ग्यन्तरेणाह, 'अदृष्टेति, अदृष्टपदं स्वजनका-

---

(१) प्रयत्नानाधारकालानाधारत्वमात्राभावादिति न तु प्रयत्नानन्तरकालत्वमिति क०।

त्युपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्यानि स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञान-चिकीर्षा-

---

दृष्टपरं, व्याप्तिश्च कालिकी तेन यदा तादृशकृतिप्रागभावस्तदा स्वजनकादृष्टप्रागभाव इति व्याप्तौ तददृष्टजनककृत्यादिप्रागभाव एव तथा निर्वहतीति तदन्या कृतिद्वयी अदृष्टाजनिका ईश्वरकृतिश्च नित्यत्वेन प्रागभावाप्रतियोगितया विशिष्टाभावसत्त्वादिति भावः। 'स्वजनकेति, स्वजनकादृष्टाधिकरणक्षणोत्तरक्षणवृत्तिः कुलालज्ञानादिः, ईश्वरज्ञानादेश्च नित्यत्वेन सकलक्षणवृत्तित्वादिति भावः। नन्वननुगमात्कथं स्वान्तर्भावेण व्याप्तिग्रह इति चेत्, इत्थं, अननुगमेन तावतामनुपस्थितिर्नाभिमता उपस्थितावपि व्याप्त्यग्रहो वाभिमतः, आद्ये जन्यत्वरूपेण हेतूकृतेन सामान्येनासत्तीभूयोपस्थापितेषु तज्जनकादृष्टत्वेनैव तावतामुपस्थितेः, अन्त्यस्तु शङ्कितोऽपि न, असम्भवात्। न चोपस्थितावपि जन्यत्वेन सर्वेषां स्वत्वाननुगमेन जन्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात्प्रत्येकं कथं व्याप्तिग्रह इति वाच्यं। गन्धव्याप्यत्वस्य पृथिवीत्वेनासम्भवेन सामान्याभावागर्भद्वितीयव्याप्तिलक्षणप्रकरण एवास्य प्रदर्शनात्। न चैवमुपादानपदमपि स्वोपादानपरतया कुतो नाभ्युपगतं कथं वा पूर्वपक्षे स्वान्तर्भावेण व्याप्तिग्रहो दूषित इति वाच्यं। तथाप्रसिद्ध्या व्याप्त्यग्रहात्। न हि जन्यत्वाधिकरणतयोपस्थितानां यावतां तज्जनकादृष्टोपस्थितिवत्तदुपादानगोचरा कृतिरपि प्रसिद्धा, क्षित्युपादानाप्रसिद्धेः प्रत्येकप्रसिद्धिं विना प्रत्येकव्याप्त्यग्रहात्। न हि

नाधारकालानन्तरकालानाधारत्वं[1] अर्थात् तत्सिद्धौ मानान्तरादीश्वरसिद्धौ अर्थान्तरत्वमिति। अत्रोच्यते। अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियो-

---

धात्मगोचरास्मदादिकृतिविषयसाक्षात्कारादावव्याप्तिरिति भावः। नन्वेवमदृष्टाद्वारकेति व्यर्थं तद्द्वारककृतिमादाय कल्पद्वयेऽपि दोषाप्रसङ्गादिति चेत्, अत्र कश्चित् विषयचलनादौ मन्त्रपाठादिसाध्येऽस्मदादिकर्तृके मा भूदव्याप्तिरित्येतदर्थं तदुपादानं मन्त्रपाठादिनादृष्टजननात्। नच विषयगोचरा कृतिरेव न किन्तु कण्ठताल्वादिगोचरेति न तदर्थं तदुपादानं अपि तु कालीशरीरे यद्गौरं रूपं उत्पन्नं तत्कालीशरीरगोचरतपश्चरणादिकृत्या जन्यते सा च कृतिरदृष्टद्वारिकेति तद्रूपेऽव्याप्तिवारणाय तद्विशेषणमिति मन्यक्। वस्तुतस्तु अदृष्टाद्वारकत्वमात्मगुणाद्वारकत्वं तेनात्मनि निदिध्यासनादिकृतिसाध्ये आत्मसाक्षात्कारे नाव्याप्तिरिति तत्त्वं, कृतिजन्यव्यापारविषयताया एव कृतिविषयतारूपत्वादिति। यदि च तत्राऽदृष्टमेव द्वारं तदा यथाश्रुतमेवादरणीयं। अत्रेतनं अन्यपदं समवेतपदञ्चाकाशादौ ध्वंसे चातिव्याप्तिवारणाय, तत्पक्षतायामंशतो बाधापत्तेरिति भावः। अथादृष्टजनकेत्युक्ते ईश्वरकृतेरप्यदृष्टजनकत्वादिति तद्वारणार्थं भङ्ग्यन्तरेणाह, 'अदृष्टेति, अदृष्टपदं स्वजनका-

---

(१) प्रथमक्षणाधारकालानाधारत्वमभावादि न ॥ प्रथमक्षणानन्तरकालत्वमिति पा०।

ग्युपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्यानि स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञान-चिकीर्षा-

---

दृष्टपरः, व्याप्तिश्च कालिकी तेन यदा तादृशकृतिप्रागभावस्तदा स्वजनकादृष्टप्रागभाव इति व्याप्तौ तददृष्टजनककृत्यादिप्रागभाव एव तथा निर्वहतीति तदन्या कृतिद्वयी अदृष्टाजनिका ईश्वरकृतिश्च नित्यत्वेन प्रागभावाप्रतियोगितया विशिष्टाभावसत्त्वादिति भावः। 'स्वजनकेति, स्वजनकादृष्टाधिकरणक्षणोत्तरक्षणवृत्ति कुलालज्ञानादि, ईश्वरज्ञानादेश्च नित्यत्वेन सकलक्षणवृत्तित्वादिति भावः। नन्वननुगमात्कथं स्वान्तर्भावेण व्याप्तिग्रह इति चेत्, इत्थं, अननुगमेन तावतामनुपस्थितिर्वाभिमता उपस्थितावपि व्याप्त्यग्रहो वाभिमतः, आद्ये जन्यत्वरूपेण हेतूकृतेन सामान्येनानुगतीभूयोपस्थापितेषु तज्जनकादृष्टत्वेनैव तावतामुपस्थितेः, अन्त्यस्तु ग्रहितोऽपि न, असम्भवात्। न चोपस्थितावपि जन्यत्वेन सर्वेषां स्वत्वस्याननुगमेन जन्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात्प्रत्येकं कथं व्याप्तिग्रह इति वाच्यम्। गन्धव्याप्यत्वस्य पृथिवीत्वेनासम्भवेन सामान्याभावागर्भद्वितीयव्याप्तिलक्षणप्रकरण एवास्य प्रदर्शनात्। न चैवमुपादानपदमपि स्वोपादानपरतया कुतो नाभ्युपगतं कथं वा पूर्वपक्षे स्वान्तर्भावेण व्याप्तिग्रहो दूषित इति वाच्यम्। तत्राप्रसिद्धव्याप्यग्रहात्। न हि जन्याधिकरणतयोपस्थितानां यावतां तज्जनकादृष्टोपस्थितिवत्तदुपादानगोचरा कृतिरपि प्रसिद्धा, क्षित्युपादानाप्रसिद्धेः प्रत्येकमसिद्धिं विना प्रत्येकव्याप्त्यग्रहात्। न हि

क्षितिमज्जन्यानि वा अपरोक्षज्ञान-चिकीर्षा-प्रयत्नवि-
षयीभवदुपादानानि वा समवेतत्वे सति प्रागभाव-
प्रतियोगित्वात् यदेवं तदेवं यथा घटः तथा चैतानि

---

यत्किञ्चित्ताट्टशसिद्धिरन्यथैवाबाधापि नत्वेति। यदा स्वपदं पक्षी-
कृतपरमेव तज्जनकादृष्टोत्तरवर्तिनी घटादिकृतिरिति भवति
घटादेर्दृष्टान्तता। न च यत्किञ्चिददुत्तरवर्तित्वमदृष्टजनककृतावपि
यावत्तदुत्तरत्वं [illegible] घटजनककृतावपीति वाच्यं। इदानीन्तनत्वे-
नापि पक्षविशेषणात्। न चैवं प्राचीने व्यभिचारः, हेतावपीदानी-
न्तनत्वेन विशेषणादिति सर्वमवदातं। 'अपरोक्षेति ताद्दृशज्ञानवि-
षयोपादानसमवेतानीत्यर्थः, स्वार्थ-जन्यर्थयोरत्राविवक्षितत्वात् इति
ध्येयं। यद्यप्यत्र प्रत्यक्षेत्युचितं न त्वपरोक्षेति घट इति वक्तव्येऽनघट-
इत्यप्रयोगात्, तथापि प्रत्यक्षत्वस्येन्द्रियजन्यत्वपरत्वे बाधः, साक्षात्त्व-
जातिपरत्वे पक्षप्रत्यसिद्धिरित्युभयसिद्धापरोक्षेत्युक्तं, तदर्थश्चाशिद्धा-
दिकरणकत्वं तच्चोभयसाधारणमेवेत्यवधेयं। ननु कर्माणि तत्त्व-
ज्ञानोत्पत्तिप्रतिबन्धकाधर्मध्वंसद्वारोपयुज्यन्त इति मते स्वात्मचिन्त-
नानुकूलकृत्या स्वात्मगोचरया प्रतिबन्धकाधर्मध्वंसद्वारा जनिते
स्वात्मसाक्षात्कारे नोक्तपक्षतावच्छेदकमस्ति, किञ्च यत्र यागादि-
समाप्त्यर्थं नमस्कारादिकृतिस्तत्र यागसेच्छाले नमस्कारस्य मानस-
तया मानसज्ञानविशेषणेनात्मगोचरः स प्रयत्नोविघ्नध्वंसद्वारा यागं
जनयतीति अदृष्टाद्वारकस्योपादानगोचरजन्यकृतिजन्यो याग इत्य-

तस्मात्तथा। उक्तपक्षे कस्यचिदनन्तर्भावेऽपि तदादाय तथैव निरुक्तस्य पक्षत्वनिर्देशे समूहालम्बनरूपैवानुमितिरुत्पद्यते। न च जन्यकृत्यजन्यत्वं तावदननुगतेष्वेकरूपाभावेन ग्रहीतुमशक्यमिति वाच्यम्। जन्यकृत्यजन्यत्वं हि जन्यकृतिजन्यान्यत्वमित्यन्यत्वेन रूपेण सामान्यलक्षणया तावतामुपस्थितेः। न च जन्यत्वविशेषणव्यावर्त्त्याप्रसिद्धिः, प्रमेयो घट इतिवद्व्यावर्त्तकत्वेऽपि तदुपरक्तबुद्धेरुद्देश्यत्वेन तस्योपरञ्जकत्वात् उक्तान्यतमत्वमेव सकर्तृकत्वं। अतएव घटभोक्ता न घट-

---

व्याप्तिरित्यत आह, 'उक्तेति, तत्र तत्र तदुभयं द्वारमेव न प्रयत्नेऽदृष्टस्यैव द्वारत्वात् कल्प्यदुरितध्वंसतोऽपूर्वस्य लघुत्वादिति वक्ष्यमाणत्वात्। द्वितीये मङ्गलस्य विघ्नध्वंसो न द्वारं किन्तु स एव फलमिति यागादृष्टातिजन्य एव नेति वस्तुगतिः। यदि च यः कश्चिदेवं ब्रूयात् तदा तन्मतेऽपि न नः क्षतिरित्यर्थः, तदाह, 'अनन्तर्भावेऽपीति। 'उपरक्तेति, उभयसिद्धप्रयोजनवत्त्वं तन्त्रं न तु प्रयोजनस्योभयसिद्धिरिति भावः। ननु सकर्तृकत्वे विवादात् साध्यान्तरेऽर्थान्तरमित्यत आह, 'उक्तेति। न चेयं परिभाषेत्याह, 'अतइति, सर्वलोकसिद्धत्वादस्यार्थस्येति भावः। ननु सत्त्वे सतीति प्रसाध्याङ्गकतया उक्तं समवेतत्वमपि समवायत्वस्य जातित्वाभावेन नित्यसम्बन्धत्वमिति निर्वाच्यं तत्रान्यतरसिद्धं तन्मते समवायस्या-

कर्त्तेति[1] व्यवह्रियते । एवञ्च शब्दफुत्कारादीनां पक्षतैव । ज्ञानेच्छादीनामपि पक्षत्वान्न सन्दिग्धानैकान्तिकता उपादानस्य सिद्धत्वेऽप्युपादेयस्यासिद्धत्वेन तदन्वया तथापि चिकीर्षा । यद्वा पक्षे द्वैतीयं च न समवेतत्वं विशेषणं तेन ध्वंसोऽपि पक्षः साध्ये च उपादानपदं कारणमात्रपरम्, अनुपादेयमेव वा जन्येच्छाकृत्यजन्यत्वञ्च पक्षे विवक्षितं तेन क्षितिध्वंसस्य कृतिजन्यत्वेऽपि[2] इच्छाजन्यत्वाभावात् पक्षत्वम् । क्षितिरेव

---

सिद्धत्वात्, किञ्च तन्मते ध्वंसोऽधिकरणात्मैवेति साध्यमपि तथात्वीति व्यभिचाराभावात् विशेषणोपादानमेवान्यतरासिद्धं । न च द्व्यणुकध्वंसादिव्यभिचारवारणाय तत्, तत्र अन्यतरस्याभावादित्यस्वरसादसाध्याङ्गकत्वबाधवात् कल्पान्तरमाह, 'यद्वेति'। ननु कारणपरत्वे तस्य शब्दादावंशतः सिद्धसाधनं। न च पक्षतावच्छेदकभेद एव तत्, तच्चतावच्छेदने अन्यसाध्यपक्षतया एतावतत्वेन एतावदायाससाधनगौरवापातादित्यत आह, 'अनुपादेयमेवेति, तदनुपादानाधिकरणपदमेवोपादेयमिति भावः। न चैवमपि शब्दादावंशतः सिद्धसाधनं, वीणादेः शब्दानधिकरणत्वात् किन्त्वधिकरणतावच्छेदकत्वादिति भावः। 'इच्छा-जन्येति, अत्र ज्ञानेच्छा-

---

(१) न तत्कर्त्तेति ख० ।

(२) ध्वंसस्यापि तस्य कार्यत्वादित्यादि ।

वा पक्षः। न चाङ्कुरे सन्दिग्धानैकान्तिकत्वम्, पक्षपक्षसमनैरपेक्षेण[१] घटादौ निश्चितव्याप्तेर्लिङ्गस्य तयोर्दर्शनेनोभयत्रानुमित्यविरोधात्, न त्वनुमित्योरन्योऽन्यापेक्षत्वं येनान्योन्याश्रयः स्यात्। प्रतिज्ञाया अविषयत्वात् तत्र पक्षसमव्यपदेशः। न चाङ्कुरस्य पक्षत्वेनानिर्देशात्तत्र न पक्षधर्म्मताज्ञानमिति वाच्यम्। सिषाधयिषाविरहसहकृतसाधकप्रमाणाभाववति लिङ्गज्ञानस्यानुमितिमात्रकारणत्वात् तत्र क्षितौ पञ्चावयवेन अङ्कुरे स्वतएवेति[२] न कश्चिद्विशेषः। यदि च

---

कृत्यजन्यत्वं विवक्षणीयं अन्यथा प्रतियोगितयेच्छाया विरोधिगुणत्वेन कृत्या च जनिते इच्छाध्वंसे पक्षतावच्छेदकाव्याप्त्यापत्तेरित्यवधेयं। ननु ध्वंससाधारणपक्षत्वे चरमदुःखादिध्वंसे स्वजनकाप्रसिद्धा साध्यासम्भवः तस्य भोग-तत्साधनेतरतया अदृष्टाजन्यत्वात् अतस्तस्य पक्षवहिर्भाव एव कर्त्तव्योगत्यन्तराभावात् एवञ्च सन्दिग्धानैकान्तिकं तत्र मा भूदिति तदर्थं कश्चिदुपायोऽवश्यं वाच्यः तथाच किमित्यमायासगौरवेण प्रत्यक्षपक्षताया एव तथात्वविकल्पात्। किञ्च पक्षतावच्छेदकस्यान्योन्याभावतया तस्य च तन्मतेऽप्रसिद्धा आश्रयासिद्धिरिति मनसिकृत्य प्रत्येकपक्षतामेव सिद्धान्तयति,

---

(१) पक्षे पक्षसमे व्यभिचारो न दोषायेति नियमादित्यादि।

(२) अङ्कुरेऽप्यत एवेतीति ख०।

स्थितौ हेतुनिश्चयदशायां अङ्कुरस्य हेतुमत्तया न निश्चयस्तदा च सन्दिग्धानैकान्तिकत्वम्।

अथ पक्षसमे साध्याभावसामानाधिकरण्यसंशयात्[1] हेतौ व्याप्तिग्रह एव नोत्पद्यते उत्पन्नोऽपि वा बाध्येत[2] इति चेत्, तर्हि महानसेऽपि धूमे व्याप्तिग्रहो न स्यात् भूतोऽपि वा बाध्येत[3] सन्दिग्धवह्निकपर्वतापर्वतधूमवतामेकधर्म्माभावेनापक्षत्वात्। तस्मात्साध्यसन्देहवति हेतुनिश्चयो न दोषः, किन्तु गुण-

---

'चितिरिति। 'तस्मादिति, विपक्षवृत्तित्वं व्यभिचारस्तद्धीः प्रतिबन्धिका सा चेह नास्तीति भावः। 'साध्यसन्देहवति अनुमितिविषयसन्देहवतीत्यर्थः, न तु व्यापकसन्देहवतीत्यर्थो व्यतिरेकिणि तस्मादोषत्वादिति ध्येयं। 'किन्त्विति, पक्षतासम्पादकत्वादिति भावः। 'अन्ययेति, तथाचानुमित्यन्यथानुपपत्त्यैव तादृशसंशयान्यसाध्याभाववद्गामित्व-

---

(१) सन्दिग्धसाध्यवत्त्वरूपेण पक्षवृत्तिधर्म्मान्तरावच्छेदेन व्यभिचारसंशयादित्यर्थः।

(२) व्यभिचारसंशयस्य न व्याप्तिग्रहप्रतिबन्धकत्वं अपि तु व्यभिचारनिश्चयस्यैव, अतः प्रतिबन्धकाभावादुत्पन्नोऽपि व्याप्तिग्रहः अप्रामाण्यशङ्काकवलितो भवति, तथाच अप्रामाण्यग्रहानास्कन्दितव्याप्तिनिश्चयस्यानुमितिकारणत्वेन तादृशज्ञानस्य नानुमितिहेतुत्वमिति भावः।

(३) धूमे व्यभिचारसन्देहात् धूमधर्म्मिकव्याप्तिग्रहस्य अप्रामाण्यशङ्काकवलितत्वं स्यादित्यर्थः।

एव,[१] अन्यथानुमानमात्रमुच्छिद्येत[२]। पक्षादन्यत्र-तद्दूषणमिति यदुक्तं तत्र पक्षान्यत्वं सिषाधयिषित-साध्यान्यत्वं यदि तदानपेक्षितानुमितिर्न स्यात्[३]। अथ सन्दिग्धसाध्यान्यत्वं साधक-बाधकप्रमाणाभाव-विषयान्यत्वं[४] वा तदा अङ्कुरेऽपि तन्नास्ति[५]। अथ

---

संशयस्य प्रतिबन्धकत्वं न तु तयोरित्यर्थो बोध्यः। यत्तु विपक्षबाधकेन व्याप्तिग्रहात् तस्य तादृशसंशयस्याप्रतिबन्धकत्वमेवेति। तन्न। तथा सति यद्ययं निर्वह्निः स्यादित्यादितर्काणामपि पक्षीयवह्निविरह-सन्देहनिबन्धनसन्दिग्धानैकान्तिकप्रतिबन्धेन मूलशैथिल्यादनवता-रात्, तथाचान्यथानुपपत्त्या तदन्यसंशयः प्रतिबन्धक इत्येव न्यायः, अत एवोपाधिसंशयाहितस्तादृशव्यभिचारसंशयः प्रतिबन्धक एवा-सार्वत्रिकत्वेनानुमानमात्रोच्छेदानापादकत्वादिति। ननु प्रत्येकपक्षत्वे

---

(१) तथाच हेतौ साध्यसन्देहविशेष्यधर्मिरूपपक्षवृत्तित्वनिश्चयस्यानु-मितावपेक्षणीयत्वेन तादृशनिश्चयस्य गुणत्वमिति भाव।

(२) अन्यथा साध्यसन्देहवति हेतुनिश्चयस्य दोषत्वे, अनुमानमात्रमुच्छि-द्येत सिषाधयिषाधीनानुमानमात्रोच्छेद आपाद्येत, तादृशानुमान-मात्रे साध्यसन्देहवति हेतुनिश्चयस्य सत्त्वादिति भाव।

(३) अनपेक्षितानुमितिर्न स्यात् अबुभुत्सितशब्दानुसम्पदाद्यनुमितिर्न स्या-दित्यर्थ, तत्र पक्षस्यापि सिषाधयिषितसाध्यान्यत्वेन यथोक्तपक्षान्य त्वस्य सत्त्वादिति भाव।

(४) यत्र साधकप्रमाणं साधनिश्चय, बाधकप्रमाणं बाधनिश्चय, तद-भावविषयत्वं विशेष्यतासम्बन्धेन तदन्यत्वमित्यर्थं।

(५) तादृशपक्षान्यत्वं नास्तीत्यर्थं।

क्षितौ हेतुनिश्चयदशायां अङ्कुरस्य हेतुमत्तया न निश्चयस्तदा च सन्दिग्धानैकान्तिकत्वम्।

अथ पक्षसमे साध्याभावसामानाधिकरण्यसंशयात्[१] हेतौ व्याप्तिग्रह एव नोत्पद्यते उत्पन्नोऽपि वा बाध्येत[२] इति चेत्, तर्हि महानसेऽपि धूमे व्याप्तिग्रहो न स्यात् भूतोऽपि वा बाध्येत[३] सन्दिग्धवह्निकपर्वतापर्वतधूमवतामेकधर्म्माभावेनापक्षत्वात्। तस्मात्साध्यसन्देहवति हेतुनिश्चयो न दोषः, किन्तु गुण-

---

'चितिरिति। 'तस्मादिति, विपक्षवृत्तित्वं व्यभिचारसङ्कोः प्रतिबन्धिका सा चेह नास्तीति भावः। 'साध्यसन्देहवति अनुमितिविषयसन्देहवतीत्यर्थः, न तु व्यापकसन्देहवतीत्यर्थो व्यतिरेकिणि तस्यादोषत्वादिति ध्येयं। 'किन्त्विति, पक्षतासम्पादकत्वादिति भावः। 'अन्यथेति, तथाचानुमित्यन्यथानुपपत्त्यैव तादृशसंशयान्यसाध्याभाववद्गामित्व-

---

(१) सन्दिग्धसाध्यवत्त्वरूपेण पक्षसदृशधर्म्मान्तरावच्छेदेन व्यभिचारसंशयादित्यर्थः।

(२) व्यभिचारसंशयस्य न व्याप्तिग्रहप्रतिबन्धकत्वं अपि तु व्यभिचारनिश्चयस्यैव, अतः प्रतिबन्धकाभावादुत्पन्नोऽपि व्याप्तिग्रहः अप्रामाण्यशङ्काकवलितो भवति, तथाच अप्रामाण्यग्रहानास्कन्दितव्याप्तिनिश्चयस्यानुमितिकारणत्वेन तादृशज्ञानस्य नानुमितिहेतुत्वमिति भावः।

(३) धूमे व्यभिचारसन्देहात् धूमधर्म्मिकव्याप्तिग्रहस्य अप्रामाण्यशङ्काकवलितत्वं स्यादित्यर्थः।

र्थान्तरम्। सामान्यतोऽपि साध्यनिर्द्देशे पक्षधर्म्मताबलेनाभिमतविशेषसिद्धिश्च। नन्वाद्यसाध्यद्वये घटाद्युपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतीनामेव जनकत्वमायातु इत्यर्थान्तरम्। न च तेषां व्यभिचारात् क्षित्यादौ न कारणत्वमिति वाच्यम्। अनादौ प्रवाहे कस्यचित् कदाचित् क्षितिद्व्यणुकादिपूर्व्वंघटाद्युपादानगोचरज्ञानादिसत्त्वात्, न च सर्गाद्यकालीनस्यापि पक्षत्वात्तत्रेश्वरसिद्धिः। परम्प्रति तदसिद्धेरिति चेत्। न। ज्ञानादीनां त्रयाणां स्वविषयसमवेतकार्य्यं प्रत्येव जन-

---

प्रद्धेयं स च मुक्तत्वं विना न तयेति तस्मादृष्टद्वारापि न चितिजनकत्वमिति न सिद्धसाधनं किन्त्वर्थान्तरमेव शङ्कितुमुचितमिति सुष्ठूक्तं न चार्थान्तरमिति। अत एव यः चित्यव्यवहितप्राक्काले विशिष्टतद्धेतुत्वेन सम्भावितः तत्र यत्नान्तरं निराकरणाय करिष्यत इति। इदन्तु ज्ञानादीनां विशेषणत्वविवक्षयोक्तं। वस्तुतो यदि तादृशात्मजन्यत्वं बाधितं तदा न विशेषणत्वं नवीयत्वणत्वं विव क्षणीयं, अपि तु सामान्यत एव तदाश्रयजन्यत्वं तथापि बाधादेव नार्थान्तरमित्याह, 'सामान्यत इति। यद्वा नियतविषयेत्यादि न विशेषणीयं सामान्यत एव साध्यसाधने पक्षधर्मतावलाद्विशेषपर्य्यवसानादित्यभिप्रेत्यैतदुक्तं, अत एव 'नन्वाद्यसाध्यद्वय इत्यादिग्रन्थः अन्यथा तदनुत्थानप्रसङ्गादिति ध्येयं। 'परम्प्रतीति विशिष्य तदनिर्द्देशादित्यर्थः। 'स्वविषयेति, स्वविषयाश्रितकार्यं प्रतीत्यर्थः, 'चित्यादाविति,

प्रतिज्ञाविषयान्यत्वं तदा स्वार्थानुमित्युच्छेदः[1]। नियतविषयज्ञानाजन्यत्वेन पक्षविशेषणात्सर्वविषयज्ञानसिद्धिः, साध्ये च ज्ञानेच्छा-प्रयत्नानां विशेषणत्वेन विशिष्टसाधनत्वं विवक्षितं तेन न तदुपलक्षितक्षेत्रज्ञेना-

---

प्रत्येकोपादानाभिज्ञसिद्धावपि नेश्वरसिद्धिरित्यत आह, 'नियतेति, न च सति बाधे तत एव तदसिद्धिरसति च बाधे विशेषणं बाधितमकिञ्चित्करञ्चेति वाच्यं। बाधप्रतिसन्धानार्थमेव विशेषणदानात्, क्षित्यव्यवहितप्राक्काले शरीराद्यभावेनोत्पन्नज्ञानाद्यसम्भवात् तन्नित्यतापर्यवसानादेव तस्य सर्वविषयत्वनियमेन वस्तुतो नियतविषयज्ञानाजन्यतया बाधस्य सत्त्वादिति भावः। ननु योगिनः सर्वविषयकज्ञानमनादौ संसारे क्षित्यादिपूर्वं कदाच्यावश्यकमिति तदाश्रयीभूतात्मनोजनकतयार्थान्तरं स्यादित्यत आह, 'साध्ये चेति, तथाच क्षित्यव्यवहितप्राक्काले तद्विशिष्टाभावाच्चेदं दूषणमिति भावः। 'नार्थान्तरमिति[2], यद्यपि न सिद्धसाधनमित्युचितं अदृष्टद्वारात्ममात्रस्यैव क्षितिजनकत्वात् तथापि यः क्षितिव्यवहितप्राक्काल एव योगीभूतः क्षित्यवहितप्राक्काले च तादृशज्ञानादिशून्यस्तमादाय

---

(१) परार्थानुमित्यपेक्षणीयस्य न्यायस्य स्वार्थानुमित्यानपेक्षणीयत्वेन तत्र पक्षस्य तादृशपक्षान्यत्वात् स्वार्थानुमित्युच्छेद इति भावः।

(२) 'न तदुपलक्षितक्षेत्रज्ञेनार्थान्तरम्' इत्यत्र 'तदुपलक्षितक्षेत्रज्ञेन नार्थान्तरमिति कस्यचिन्मूलपुस्तकस्य पाठमनुसृत्य 'नार्थान्तरमिति पाठो दत्त व्याख्याकृतेति सम्भाव्यते।

र्थान्तरम्। सामान्यतोऽपि साध्यनिर्द्देशे पक्षधर्म्मतावलेनाभिमतविशेषसिद्धिश्च। नन्वाद्यसाध्यद्वये घटाद्युपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतीनामेव जनकत्वमायातु इत्यर्थान्तरम्। न च तेषां व्यभिचारात् क्षित्यादौ न कारणत्वमिति वाच्यम्। अनादौ प्रवाहे कस्यचित् कदाचित् क्षितिद्व्यणुकादिपूर्व्वघटाद्युपादानगोचरज्ञानादिसत्त्वात्, न च सर्गाद्यकालीनस्यापि पक्षत्वात्तत्रेश्वरसिद्धिः। परम्प्रति तदसिद्धेरिति चेत्। न। ज्ञानादीनां त्रयाणां स्वविषयसमवेतकार्य्यं प्रत्येव जन-

---

शङ्क्येयं स च सुकत्वं विना न तथेति तस्याद्दृष्टद्वारापि न क्षितिजनकत्वमिति न सिद्धसाधनं किन्त्वर्थान्तरमेव शङ्कितुमुचितमिति सद्धूक्तं न चार्थान्तरमिति। अत एव यः क्षित्यव्यवहितप्राक्काले विशिष्टस्तद्धेतुत्वेन सम्भावितः तत्र पक्षान्तरं निराकरणाय करिष्यत इति। इदन्तु ज्ञानादीनां विशेषणत्वविवक्षयोक्तं। वस्तुतो यदि तादृशात्मजन्यत्वं बाधितं तदा न विशेषणत्वं नवोपलक्षणत्वं विवक्षणीयं, अपि तु सामान्यत एव तदाश्रयजन्यत्वं तथापि बाधादेव नार्थान्तरमित्याह, 'सामान्यत इति। यद्वा नियतविषयेत्यादि न विशेषणीयं सामान्यत एव साध्यसाधने पक्षधर्मतावलाद्विशेषपर्य्यवसानादित्यभिप्रेत्यैतदुक्तं, अत एव 'नन्वाद्यसाध्यद्वय इत्यादिशङ्का अन्यथा तदनुत्थानप्रसङ्गादिति ध्येयं। 'परम्प्रतीति विशिष्य तदनिर्द्देशादित्यर्थः। 'स्वविषयेति, स्वविषयाश्रितकार्यं प्रतीत्यर्थः, 'क्षित्यादाविति,

कर्तृत्वावधारणेनैतदनुमानस्य तदविषयत्वात्। अत एवा-न्योपादानगोचरापरोक्षज्ञानाद्यजन्यत्वेन पक्षविशेषण-मपि न युक्तम्। तृतीयसाध्ये तु नार्थान्तरं क्षित्यादौ घटाद्युपादानासमवेतत्वात्। ननु सामान्यलक्षणादि-प्रत्यासत्त्या क्षित्याद्युपादानगोचरं यत् प्रत्यक्षं तज्जन्य-त्वमेवास्तु तथाचेश्वरे न प्रत्यक्षं न चेच्छा-प्रयत्नौ तयोः समानाधिकरणज्ञानाविषयोऽसत्त्वात्[१]। न च तादृशप्र-त्यासत्त्यजन्यत्वं प्रत्यक्षविशेषणं, परमत्यसिद्धेरिति चेत्। न। द्रव्यत्वेन ज्ञानलक्षणया वा कपालगोचरप्रत्यक्षेऽपि घटादौ अकर्तृकत्वात् क्षित्यादौ सकर्तृकत्वनिर्वाहकं ज्ञानं सिध्यद्विलक्षणमेव सिध्यति। न चावयवविभाग-द्वारा क्षित्यादिषु जलक्षेपात्समुद्रादिषु हस्तक्षेपात्पर-माणुद्वयसंयोगे च द्व्यणुकेऽस्मदादिकर्तृकत्वादंशतः सि-द्धसाधनमिति वाच्यम्। तत्र हि क्षितिनाशे अस्मदा-दीनां कर्तृत्वं न तु खण्डक्षितौ अवस्थितसंयोगेभ्य एव

---

तादृशज्ञानस्य असकृताबाधेन पक्षधर्मताबलादेतादृशज्ञानसिद्धिरिति भावः। 'न चेति, अत्र प्रत्येकपक्षत्वाभावचिन्तितत्वादिना परमत्यसि-द्धेरिति चिन्तितादिनैव तद्वाच्यं तथा सति सिद्धसाधनशङ्का द्रष्टव्या, अन्यथा सामान्यतो विशेषतो वा पक्षत्वे एवं सिद्धसाधनानवकाशात्

---

(१) समानाधिकरणज्ञानाविषयत्वादिति क०।

तदुपपत्तेः सकलतदुपादानगोचरज्ञानेच्छा-कृतीनामभावाच्च। अत एव द्व्यणुकेऽपि न कर्तृत्वम् जलक्षेपाद्धिकपरिमाणकसमुद्रादेः सपक्षत्वमेव घटस्येव। ननु घटे साध्यविकलत्वम् अन्वय-व्यतिरेकाभ्यां ज्ञानादेरेव जनकत्वात् न तु तदाश्रयस्य धर्म्मिग्राहकस्यान्वयव्यतिरेकस्य वा ग्राहकस्याभावात्। न च घट आत्मजन्य उत्पत्तिमत्त्वात् ज्ञानवदिति वाच्यम्। आत्मसमवेतत्वस्योपाधित्वात्[1] घटः आकाशजन्य उत्पत्तिमत्त्वात् शब्दवदितिवदप्रयोजकत्वाच्चेति[2] चेत्। मैवम्। प्रयत्नवदात्मसंयोगश्चेष्टाद्वारा घटहेतुरतः प्रयत्न इव आत्मापि हेतुः। न चात्मसंयोगे सत्यपि प्रयत्नं

---

उभयथापि पक्षप्रवेशादिति ध्येयं। 'सकलेति, ज्ञानानुरोधात्सकलेत्युक्तं, इच्छा-कृती तु क्षित्युत्पादानैकदेशे क्वापि नेत्यवधेयं। 'अधिकपरिमाणेति, अत्र प्रक्षिप्यजलविन्दु-समुद्रयोरेवावयवत्वेनोभयोपादानगोचरसाक्षात्कारादिसम्भवादिति भावः। 'घटस्येवेति, एतेन तद्-

---

(१) आत्मसमवेतत्वस्य निश्चितसाध्यव्यापकत्वे सति साधनाव्यापकत्वात् उपाधित्वं।

(२) अप्रयोजकत्वात् अनुकूलतर्कशून्यत्वादित्यर्थः, अनुकूलतर्काभावेऽपि यद्युक्तानुमानप्रामाण्यं तदा घट आकाशजन्य उत्पत्तिमत्त्वात् शब्दवदित्यनुमानस्यापि प्रामाण्यं स्यादिति।

विना न चेष्टेति प्रयत्न एव तत्कारणं, असमवायिकारणं विना कार्यानुत्पत्तेः[१]। न चात्मसंयोगस्य कारणत्वेऽपि संयोगे परिचायकमात्रमात्मेति वाच्यम्। संयोगमात्रस्याकारणत्वेन संयोगिविशेषितस्य हेतुत्वात्। आत्मसंयोगव्यतिरेकप्रयुक्तक्रियाव्यतिरेकस्यासिद्धेर्नात्मसंयोगः[२]कारणमिति चेत्। न। या क्रिया व्यधिकरणयदीयगुणजन्या सा तत्संयोगासमवायिकारणिका[३]

देव पक्षतानवच्छेदकावच्छिन्नतया सिद्धसाधनाप्रसङ्ग इति सूचित। 'आत्मनि' आत्मवृत्तित्वेनेत्यर्थः। 'या क्रियेति' य स्पन्द स्वव्यधिकरणयदीयगुणाभावप्रयुक्ताभावप्रतियोगी स तत्संयोगासमवायिकारणक इत्यर्थ, तेन व्यधिकरणग्रहणात् गुरुत्ववद्द्रव्यसंयोगजन्यायां गुरुत्वजन्यपतनक्रियाया गुणग्रहणात् स्वाश्रयावयवसंयोगाजन्यतया तस्यामेव व्यभिचार, ईश्वरज्ञानजन्यत्वेऽपि क्रियाया नेश्वरसंयोगोऽसमवायीति तदभावप्रयुक्तेति वाच्य। न हि नित्यव्यापकाभाव

(१) तथाच चेष्टां प्रति असमवायिकारणं शरीरात्मसंयोग, प्रयत्नस्तु निमित्तकारणं न त्वसमवायिकारणं समवायिकारणे शरीरे च प्रत्यासत्यभावात्, न हि निमित्तकारणेनासमवायिकारणस्य वन्ध्यायिकारणस्य चान्यथासिद्धि।

(२) आत्मनो नित्यत्वेन सर्वमूर्त्तसंयोगानुयोगित्वेन च सर्वदैव मूर्त्तान्तरसंयोगस्य सत्त्वात् तद्व्यतिरेकेण क्रियाव्यतिरेकासिद्धिरिति भाव।

(३) चेष्टारूपक्रियायां स्वव्यधिकरणो य आत्मगुणः प्रयत्न तज्जन्यत्वेनात्मसंयोगासमवायिकारणकत्वं सिद्धमिति।

यथा स्पर्शवद्वेगद्रव्यसंयोगजा क्रियेति व्याख्या तत्सिद्धेः। न च क्रियाया मूर्त्तमात्रसमवेतासमवायिकारणकत्वनियम इति वाच्यम्। कार्यमात्राभिप्रायेण ज्ञानादौ व्यभिचारात् विशिष्याप्रयोजकत्वात् असमवायिकारणसंयोगाश्रयस्य तत्कार्यजनकत्वनियमाच्च।

अन्ये तु अनुकूलकृतिसमवायित्वं[1] कर्तृत्वं न तु जनकत्वे सति गौरवात्। कर्त्तरि कारकव्यपदेशस्याभियुक्तानां सविशेषणे हीति न्यायेन[2] कृतिपर्यवसन्न एव। एवं ज्ञानेच्छा-कृतिजन्यत्वमेव साध्यं तदाश्रयत्वमेवेश्वरस्य कर्तृत्वम्।

---

सम्भवति, क्रियापदस्य स्पन्दपरत्ववर्णनन्तु घटरूपादौ व्यभिचारवारणाय। अत्र क्रियात्वेन हेतुना सत्प्रतिपक्षमाशङ्क्य निषेधति, 'न चेति, प्रागुक्तहेतौ हेत्वन्तरं समुच्चिनोति, 'असमवायीति, जनकेत्यत्रैव तात्पर्यं, असमवायिग्रहणञ्च प्रकृताभिप्रायेणेति ध्येयं।

'अन्ये त्वित्यस्वरसविभावन, तद्बीजमिदमेव यद्विशेष्यबाधेन सविशेषणे हीत्यादिन्यायावतार इति कर्त्तैव कारक इति।

---

(१) तत्कर्तृत्वं तदनुकूलकृतिमत्त्वमात्रं न तु तज्जनकत्वे सति तदनुकूलकृतिमत्त्व जनकत्वांशस्याव्यावर्त्तकत्वादिति तात्पर्य्यम्।

(२) सविशेषणे हि विधि-निषेधौ सति विशेष्ये अन्वयबाधे विशेषणमुपसङ्क्रामत इति न्यायेनेत्यर्थः।

अथ घटे कृतिसाध्येष्टसाधनताज्ञानं चिकीर्षाद्वारा हेतुः तच्च न प्रत्यक्षं चिकीर्षाविषये अनागते इन्द्रियासन्निकर्षात्[१] किन्तु अनुमितिरूपं तथाच साध्यविकलोदृष्टान्तः साध्याप्रसिद्धिर्वा दोष इति चेत्। न। सिद्धस्त्यसिद्धविषया हि कृतिः सिद्धविषयप्रत्यक्षे सति सम्भवति। न हि मृदवयवानां संस्थानविशेषे कृतिसाध्येष्टसाधनतानुमितावप्यवयवस्य प्रत्यक्षेणोपस्थितिं विना प्रवृत्तिः। अत एव यागे शब्दात्तदुपजीविलिङ्गाद्वा कृतिसाध्येष्टसाधनत्वेऽवगतेऽपि हविरादीनां प्रत्यक्षेणानुपस्थितौ न प्रवृत्तिः। न चोपादानप्रत्यक्षं प्रवर्त्तकज्ञानोपक्षीणं[२]। अप्रत्यक्षे परमाणौ तत्क्रियायामिष्टसाधनताज्ञानेऽपि प्रवृत्त्यभावात्। प्रवृत्तिविषयस्य मृदङ्गादेः प्रत्यक्षत्वात् न शब्दफूत्कारादिना व्यभिचारः। न चाभिमतग्राहकेन्द्रियसंयोगार्थं मनसि प्रयत्नजन्यक्रियादर्शनाद्व्यभिचारः, अदृष्टसहकृतत्वगिन्द्रियेण हि मनोवहनाडीनामुपलम्भेन तद्गोचरप्रयत्नात् नाडीक्रिया ततः स्पर्शवद्वेगवन्नाड्या नोदना-

(१) इन्द्रियासामर्थ्यादिति ख०।

(२) प्रवर्त्तकं यत् कृतिसाध्येष्टसाधनताज्ञानं तेन उपक्षीणं अन्यथासिद्धमित्यर्थः।

न्मनसि क्रिया न तु प्रयत्नात्। अत एव जलाद्यभ्यवहारमलोत्सर्गहेतुनाडीनामनाद्यभ्यासवासनावशात् अदृष्टसहकृतत्वगिन्द्रियेणोपलम्भात् तद्गोचरप्रयत्नः। नन्वेवं घटादावनुमितिजन्यत्वदर्शनादीश्वरे अनुमितिरपि सिद्ध्येत यथा प्रत्यक्षस्येन्द्रियजन्यत्वेऽपि नित्यं तदीश्वरे तथानुमितेर्लिङ्गजन्यत्वेऽपि सा तत्र नित्यैव अनित्येन अनादिद्व्यणुकाद्यजननादिति चेत्। न। स्वसुख-दुःखाभावादिसाधनतानुमितेर्हि हेतुत्वं घटादौ गृहीतम्। न च भगवति शरीराद्यदृष्टाभावेन सुखमस्ति, अतो न क्षित्यादौ तस्य तथानुमितिर्यथार्था सम्भवति। न च तादृगनुमितेरनुमित्यन्तरस्य वानुमितित्वेन घटादौ प्रवृत्तिविषयप्रत्यक्षवद्धेतुत्वं गृहीतमिति नेश्वरे अनुमितिः। ननु द्वेषजन्यकृतिसाध्ये चिकीर्षाविरहाद्व्यभिचारः तद्दृष्टान्तेन क्षित्यादौ द्वेषसाध्यत्वादीश्वरे

---

'न च भगवतीति, यद्यपि सुख-दुःखमतन्त्रं स्वेष्टत्वन्तु तथा अस्ति चेश्वरस्य स्वेष्टं विश्वस्यैव तदिच्छाविषयत्वात्, तथापि स्वेष्टसाधनताज्ञानत्वेन जनकत्वं लाघवात् न तु तथानुमितित्वेन, अस्ति च भगवति स्वेष्टसाधनताज्ञानं प्रत्यक्षरूपं विश्वगोचरत्वात् तत्प्रत्यक्षस्येत्याशयः। तदिदमुक्तं न चानुमितित्वेन जनकत्वं इति। ननु चिकीर्षापदं कृतिजनकजातीयगुणपरमित्यत आह, 'तद्दृष्टान्तेनेति,

द्वेषोऽपि भवेत् द्वेषवतः संसारित्वे भगवतोऽपि तथात्वापत्तिरिति[१] चेत् । न । न हि सर्पादिद्वेषादेव तन्नाशानुकूलव्यापारे कृतिरुत्पत्तुमर्हति । प्रयोजनमन्तरेण प्रेक्षावतां दुःखैकफले कृतेरनुत्पत्तेः किन्तु दुःखसाधनध्वंसं तत्साध्यदुःखानुत्पादं वा फलमुद्दिश्य तत्साधनताज्ञानात् तथाचेष्टसाधनताज्ञानात् तदिच्छातस्त्वेवेति सैव कृतिकारणं क्लृप्तत्वात्, द्वेषस्तु परम्परया तदुपक्षीणः कुतस्तर्हि द्वेषसिद्धिः अनु द्वेष्मीत्यबाधित-

---

'कृति' प्रवृत्तिरित्यर्थः, एवमग्रेऽपि, यथाश्रुते निवृत्तिजनकप्रयत्नस्य द्वेषजन्यत्वादसम्भव, प्रवृत्तौ प्रत्येव समानविषयतालाघवेन चिकीर्षाहेतुत्वं तु भिन्नविषये द्वेषोऽपि, निवृत्तौ प्रति तु द्वेष एव समानविषयतया हेतुत्वं तु भिन्नविषया चिकीर्षेति । न च प्रवृत्तिविरह एव निवृत्ति, वैपरीत्यापत्ते[२] । तदुक्तं कुसुमाञ्जलौ "प्रवृत्तिप्रयत्नो रागान्निवृत्तिस्तु द्वेषादिति, अन्यथा चिकीर्षया द्वेषान्यथासिद्धिरित्यस्यैवासिद्धेर्वैपरीत्यस्यापि सुवचत्वात् यदिच्छा तदभावे द्वेषनियमात् । न चैव कथं व्यभिचारोद्धार, निवृत्तौ क्रियाविरहहेतुत्वेन प्रवृत्तिसाध्यतानियमेन च कार्याणां चिकीर्षाजन्यत्वनियमात् । नन्वेवं कुत इत्यादि ग्रन्थ कथं, इत्थं, कुतस्तर्हि द्वेष स्वीक्रियते कारणान्तरमेव निवृत्तौ स्वीक्रियतामित्याक्षेपे अनु द्वेष्मीत्यबाधितानुव्यव-

---

(१) तथा स्यादितीति ख० ।

(२) विनियमकाभावेन प्रवृत्तेर्निवृत्तिविरहत्वापत्तेरित्यर्थः ।

प्रत्ययात्। न चादृश्यस्य कर्त्तुरनुपलब्धिबाधः, अनुपलब्धिमात्रस्य बाधकत्वे अतीन्द्रियोच्छेदात्[१] योग्यानुपलब्धेश्चासिद्धेः परमात्मनोऽयोग्यत्वनियमात्, शशशृङ्गप्रतिबन्ध्या च नादृश्यमात्रनिरासः परमाण्वादिस्वीकारात्। नाप्यये ग्यकर्तृनिरासः, चेष्टया ज्ञानादिमतः परमात्मनोऽनुमानात् परम्प्रति तस्यायोग्यत्वात्। नापि शृङ्गे पशुत्ववदप्रयोजकम्, कर्तुः कार्य्यमात्रे कारणत्वावधारणात्, प्रतिबन्धिमात्रस्य चादूषणत्वात्। शशे पशुत्वेनायोग्यशृङ्गसिद्धिः कुतो नेति चेत्। न। अर्थान्तरत्वात् विपक्षे बाधकाभावेन व्याप्त्यसिद्धेः शृङ्गत्वस्य योग्यसंस्थानविशेषव्यङ्ग्यत्वेनायोग्यस्य विरोधेन शङ्कितुमशक्यत्वात् शशे शृङ्गस्यात्यन्ताभाव इति सर्वेषामबाधितप्रत्यक्षबाधितत्वाच्च। अथ कृति-कार्य्ययोरन्वय-व्यतिरेकाभ्यां व्याप्तिग्रहः त्वन्मते व्यापककृतेः सत्त्वे तद्देशे समये वा

सायसाचिके तत्र न ततोऽन्यत्कारणं कल्प्यमिति परीहारे तदभिप्रायादिति। ननु यत्समवायीत्याद्यन्वयानुविधानात् तदाश्रयत्वमात्रं सिध्यति न तु तत्कारणत्वं तत्र सिद्धे तदाश्रये तु आश्रयत्वावच्छेदे-

(१) चक्षुराद्यतीन्द्रियाणां सर्व्वदैवानुपलम्भात् अनुपलब्धेः प्रमाणत्वे तेषामुच्छेदापत्तेरित्यर्थः।

कृतिमात्रव्यतिरेकानिरूपणात्[१]। नित्यकृतेरन्वयोऽपि न गृहीतः वह्निमात्रव्यतिरेकोऽस्ति गृह्यते चेति। न चैवमाकाशात्मनोरप्रसिद्धिः समवायिमात्रस्य व्यतिरेकानिरूपणेन कार्य्यं समवायिकारणजन्यमिति व्याप्तेरसिद्धेरिति वाच्यम्। समवायिकारणत्वग्रहे हि तत्संसर्गाभावोऽप्रयोजको निमित्तमात्रसाधारणत्वात् किन्तु यत्समवायि तत्र कार्य्यं यन्न समवायि तत्र नेत्यन्योऽन्याभावमादाय कार्य्यं समवायिजन्यमिति व्याप्तिग्रहसम्भवात् समवायित्वेन तयोरन्योऽन्याभावोऽस्ति गृह्यते च[२]। यद्वा भावकार्य्यं समवेतमिति

---

तान्वयाद्यनुविधानात् आश्रयत्वेनैव, किन्तु समवायिकारणत्व विशिष्टतावच्छेद्य कार्य्ये नीलघटत्ववदार्थसमाजसिद्धिसा सिद्धत्वात् तथा हि उक्तान्वयाद्यनुविधानात् समवायित्व समवायित्वेन च कारणत्व विशिष्टमवच्छेद्य ग्राह्य वा। अपि च समवायित्वमविशिष्ट न व्याप्य व्यभिचारादिति स्वसमवायीति वाच्य, एव कार्य्ये व्यर्थविशेषणतया यद्यत्र समवायि तत्र तदिति जात्यादिसाधारण्यनान्वय व्यतिरेकयोस्तदाश्रयत्वमात्र ग्राह्य न तु तद्धेतुत्वमित्यस्वरसादाह, 'यद्वेति।

---

(१) निरुक्तते सर्व्वकालावच्छेदेन सत्त्वात् कृतिसामान्यव्यतिरेकप्रयुक्त कार्य्यव्यतिरेकासिद्धेरित्यर्थः

(२) तथाच समवायिकारणतायाहकव्यतिरेकोऽन्योन्याभाव एव नात्यन्ताभाव इति भाव।

व्याप्त्या तयोः सिद्धिरिति,[१] न, यथा हि यद्यद्वह्नेरन्वये धूमो गृहीतस्तत्तद्व्यतिरेके धूमभावव्यतिरेकग्रहात् वह्नि-धूमभावयोर्व्याप्तिग्रहः न तु पर्वतीयवह्नेरन्वय-व्यतिरेकग्रहात्। न चान्यान्वय-व्यतिरेकाभ्यां अन्य-व्याप्तिग्रहे अतिप्रसङ्ग इति वाच्यम्। यद्विशेषयोर-न्वय-व्यतिरेकग्रहस्तत्सामान्ययोर्बाधकं विना व्याप्ति-ग्रहात्, स च वह्नि-धूमव्याप्तिग्रह उत्पद्यमानः सकल-धूमगोचरो धूमत्वपुरस्कारेण प्रसिद्धधूमगोचर एव वा, तथेहापि कृतिविशेष-कार्य्यविशेषयोरन्वय-व्यति-रेकग्रहो बाधकमन्तरेण कृति-कार्य्यभावयोर्व्याप्तिग्रहे उपायः, न तु पक्षधर्म्मतावललभ्यविशेषान्वय-व्यति-

'यद्विशेषयोरिति यद्धर्मवत्त्वेनोपस्थितविशेषयोरन्वयादिग्रहस्तद्धर्मा-वच्छिन्नव्याप्तिग्रहादित्यर्थः, 'सकलधूमगोचर इति सामान्यलक्षणा-भ्युपगमादस्मन्मते, 'प्रसिद्धेत्यादि तदनभ्युपगमात् परमत इति मतभेदेनोभयविकल्पेनोक्तं। 'न त्विति व्याप्तिग्रहः सामान्यलक्षणा-धीनतया पक्षधर्मतावललभ्यमपि विषयीकरोति न तु तद्ग्राहका-न्वयादिधीरपि तमित्यर्थः।

(१) आकाशात्मनोः सिद्धिरित्यर्थः, तथाच शब्दः समवेतः भावकार्य्य-त्वात्, ज्ञानं समवेतं भावकार्य्यत्वात् इत्यनुमानाभ्यां आकाशात्माति-रिक्तसमवेतत्वबाधात् तयोः सिद्धिरिति भावः।

रेकग्रहः, अनुमानमात्रोच्छेदप्रसङ्गात्[१] एतेन कार्य्यत्वस्य विपक्षवृत्तिहतये सम्भाव्यतेऽतीन्द्रियकर्त्ता चेद्व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति, दृश्योऽथ व्यतिरेकसिद्धिमनसा कर्त्ता समाश्रीयते तत्त्यागेऽपि तदा तृणादिकमिति व्यक्तं विपक्षेक्षणमिति निरस्तम्। ननु यदि कर्तृमात्रव्याप्तिग्रहाददृश्यकर्तृसिद्धिस्तदा वह्निमात्रव्याप्तधूमात् अदृश्यजाठरीयवह्निसिद्धिरपि

यत्तु इदन्तु तदनुमतप्रमाणमहिम्ना समाधिर्वैकर्य्येणोक्तं। वस्तुतः कृतिव्यतिरेको वा तदन्वयो वा नापेक्षणीयोऽसाध्यत्वात् किन्तु कृतिजन्यत्वस्य साध्यतया तस्यैव तावपेक्षितौ तौ च व्यापककृतेरज्ञानेऽपि घटादौ कृतिजन्यत्वान्वयेनाकाशादौ तद्व्यतिरेकेण सुग्रहाविति कथमन्यथासिद्ध्या व्याप्तिग्रह इति शङ्काप्युपतिष्ठते। न च कृतिजन्यत्वसाध्यप्रसिद्धौ घटाकाशादौ तदन्वयव्यतिरेकग्रहः तत्प्रसिद्धिरेवान्वय-व्यतिरेकाभ्यां कार्य-कारणभावग्रहे तत्रायमाक्षेपः समाधानं चेति वाच्यं। तथापि कृतेर्व्यापकत्वेऽप्युपादानाभावेनैवोपादानकृतिव्यतिरेकग्रहसम्भवादिति। तन्न। एवं हि व्यतिरेकग्रहसम्भवेऽप्यन्वयग्रहाक्षेपे यत्किञ्चिद्विशेषयोरेवा-

(१) नियताधियिवानधीनानुमानमात्रोच्छेदप्रसङ्गादित्यर्थः, तथाच नियाधियिवाधीनानुमाने पक्षे साध्य-हेत्वोर्निश्चयेऽपि तदनधीनानुमाने तादृशनिश्चयासम्भवेन पक्षे साध्य हेत्वोरन्वय व्यतिरेकग्रहासम्भवात् तादृशानुमानमात्रोच्छेदप्रसङ्ग इति भाव।

स्यात्। न स्यात्। अदृश्यवह्नेर्धूमानुत्पत्तेर्दृश्यस्य तत्र हेतुत्वात्। ननु ज्ञानेच्छा-प्रयत्नत्रयव्यतिरेकान्न कार्य्यव्यतिरेकः किन्तु एकैकव्यतिरेकात् तथाच व्यर्थविशेषणत्वेन विशिष्टव्यतिरेको न हेतुव्यतिरेकव्याप्य इति न हेतोर्विशिष्टसिद्धिः साध्याभावव्यापकाभावप्रतियोगिन एव साध्यगमकत्वादिति चेत्। न। यत एकैकव्यतिरेकात्कार्यव्यतिरेकः अत एव कार्यत्वादेकैकं सिध्यत् त्रयमपि सिध्यति आर्थस्तु समाजः। स्यादेतत् अशरीरे नित्यज्ञानादिमान् सर्वज्ञः कर्त्ता पक्षे विवक्षितो घटादौ च कार्यत्वस्य तद्विपरीतकर्तृसह-

---

न्वयाद्यवगमस्तत्त्वं न तु पक्षधर्मतावललभ्यान्वयादिधीरित्येव समाधानादित्यस्यैवाभिधेयत्वादिति।

'किन्त्वेकैकेति, यद्यप्येकैकसत्त्वेऽपि कार्याभावात् त्रितयव्यतिरेकग्रह एव तत्त्वं, तथापि स्वेतरसमवधान इत्यस्यावश्यं प्रवेशे सतीदं द्रष्टव्यं। 'व्यर्थेति, अत्र शङ्कते साध्ये भवति न व्यर्थविशेषणता हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य गुरुण्यपि साध्यतावच्छेदके सुग्रहत्वात् अवच्छेदकतायां हि भवति गौरवं दोषो यथा हेतुनिष्ठनीलधूमत्वादौ, साध्यनिष्ठधर्मे त्ववच्छेदकत्वं ग्राह्यमेव किन्तूक्तप्रतियोगितावच्छेदकत्वाभावस्तच्च गुरुण्यपि सुग्रहमन्यथा तादृशधर्मस्य प्रतियोगितानवच्छेदकत्वस्य

चारदर्शनादिशेषविरुद्धत्वमिति चेत्। न। हेतोर्विवक्षितसाध्यविपरीतसहचारमात्रस्यादूषकत्वात्। अन्यथानुमानमात्रोच्छेदप्रसङ्गात्। न चानित्यज्ञानासर्वज्ञशरीरिकर्तृत्वेन समं कार्यत्वस्य व्याप्तिरस्ति येन विपरीतसाधने विरुद्धत्वं स्यात् तादृशव्याप्तिश्च त्वया मया वा नाङ्गीक्रियते अङ्कुरादौ योग्यानुपलम्भेन शरीरिकर्तृकत्वाभावात्। अथ यथादर्शनबलप्रवृत्तव्याप्त्याऽनित्यज्ञानादिमान् कर्तोपनेयः पक्षधर्मतया च नित्यज्ञानादिमान् तथाचोपनेयविशेषयोर्विरोधेन व्याप्ति-पक्षधर्मतयोर्विरोधात् परस्परसहकारिताविरहान्नानुमानं विशेषविरोधादिति। चेत्। न।

---

केनापि प्रमाणेनायं प्रतियोगितावच्छेदकत्वमेव सिद्धमिति सर्वथा न व्यर्थविशेषणतेति साध्ये व्यर्थविशेषणता तादृशजिज्ञासाया मर्यान्तरत्वेन दोष इत्येव वाच्यं, तच्च चेद्विशिष्टस्य सिषाधयिषा तदा कथं तदवकाश इति। मैवं। अन्योन्याभावगर्भव्याप्तौ साध्यवत्तावच्छेदेन साधनसमानाधिकरणान्योन्याभावाप्रतियोगित्वस्य साध्यतया तत्र कथं व्यर्थविशेषणत्वात् तदा नीलधूमत्वस्यावच्छेदककोटिप्रवेशादिति। ‘योग्यानुपलम्भेनेति, एतच्च विशेषणभागे द्रष्टव्यं, विशेष्यस्य परात्मनोऽयोग्यत्वादिति। दृष्टान्तदृष्टपक्षधर्मतावललभ्ययोर्विशेषयोर्विरोधादिशेषविरोधमाशङ्कते, ‘अथेति,

अनित्यज्ञानादिकर्तृजन्यत्वेन व्याप्यग्रहात् ज्ञानादिमत्कर्तृजन्यत्वव्याप्तेश्च पक्षधर्म्मतावललभ्यविशेषाविरोधात् केवलाया व्याप्तेः पक्षधर्म्मतायाश्च पृथगुपनायकत्वाभावाच्च एकवैयर्थ्यप्रसङ्गात्। तथाच निरपेक्षतादशायां विशेषानुपस्थानादेव न विरोधज्ञानम्, सापेक्षतादशायान्तु सहोपलम्भादेव विरोधप्रतियोगिनोः सिद्ध्यसिद्धिभ्यां विरोधज्ञानाभावश्च। लिङ्गविशेषण-साध्यविशेषणविरोधे च विशेष्यविरोधः, यथा चन्दनप्रभववह्निमानयम् असुरभिधूमवत्त्वादिति[१]। ननु ज्ञानत्व-नित्यत्वयोः कर्तृत्वाशरीरित्वयोश्च परस्परविरुद्धत्वेन एकधर्म्मिसमावेशात् कथं नित्यज्ञानादिकर्तृसिद्धिरिति चेत्। न। उपसंहारस्थानस्याभावात्। तथाहि ईश्वरे तद्बुद्धौ चाशरीरित्व-कर्तृत्वे बुद्धित्व-नित्यत्वे[२] चोपसंह्रियमाणे विरुद्धे। न तु स्वाश्रयस्थिते उभयोच्छेदप्रसङ्गात्। न चेश्वरस्तद्बुद्धिर्वोपस्थिता, उपस्थितौ वा धर्म्मिग्राहकमानेन तयो-

साध्याश्रयोर्विरोधात् तमाह, 'नन्विति।

---

(१) असुरभिधूमस्य चन्दनप्रभववह्निज्ञापकत्वासम्भवात् साध्यविशेषणचन्दनप्रभवत्वस्य हेतुविशेषणासुरभित्वस्य च परस्पर विरोध इति भाव।

(२) ज्ञानत्व नित्यत्व इति पाठान्तर।

विरोधापहारात्, अनुपस्थिते च तद्‌द्वये विरोधज्ञानमकिञ्चित्करमेव, अस्मदादिबुद्धौ व्योमादौ कुविन्दे मुक्तात्मनि चोपस्थिते विरोधोपसंहारात्। बुद्धित्वनित्यत्वयोः कर्तृत्वाशरीरित्वयोरनधिगमेऽपि ईश्वरे[१] अशरीरिकर्तृत्व-नित्यज्ञानादिसिद्धिरप्रत्यूहैव। अतएव नित्यत्वावयवत्वयोर्विरोधज्ञानमकिञ्चित्करमेवेति परमाणुसिद्धिः। ईश्वर-तद्‌बुद्ध्यादिकन्तर्कितमिति चेत्। न। तर्कस्य प्रसञ्जनस्य संशयस्य चाज्ञातेऽसम्भवात्[२]। स्यादेतत्, घटादौ कृतिसाध्यता हस्तादिव्यापारद्वारैव गृहीता न तु साक्षात्। न च पितापुत्रयोरेकघटसाधनत्वमिव प्रयत्न-हस्तादिव्यापारयोः साक्षात्साधनत्वं वाच्यमिति वाच्यम्। घटार्थं हस्तव्यापारवत्कुलालसमीपस्थस्य[३] हस्तादिव्यापारशून्यस्य तद्घटकर्तृत्वापत्तेः। न च हस्तादिव्यापारवत्ता अशरीरस्य सम्भवति। अन्यादृशी च कृतिसाध्यता न दृष्टा। शरीर-तद्व्यापारौ चाङ्कुरे बाधिताविति कर्तुरपि बाध एव। अन्यथा त्वदनुमानादेव क्षेत्रज्ञ-

(१) भगवति मते इति ख० ।

(२) तथाच तर्कादौ धर्म्मिज्ञानस्य हेतुत्वेन तदभावे तदसम्भव इति भावः।

(३) हस्तव्यापारादिना व्यापियमाणकुलालसमीपस्थस्येति घ० ।

एव कर्त्तानुमीयेत बुद्ध्यादिमत्पराात्मनो योग्यानुपलब्धिबाधाभावात्। शरीरव्यापारद्वारैव क्षेत्रज्ञस्य हेतुत्वात् शरीरव्यापारस्य चाङ्कुरे बाधात् स बाधित इति चेत्। तर्हि कृतिमात्रस्यापि तद्द्वारैव चेष्टेतरकार्य्ये कर्तृत्वावधारणात् तद्बाधे कृतिमात्रबाधोऽपि। एवञ्च कृतिसाध्यत्वे शरीरव्यापारजन्यत्वं प्रयोजकमिति स एव उपाधिः। एवं ज्ञानेच्छयोरपि इच्छाकृतिद्वारा जनकत्वमिति कथं द्वारं विना क्षित्यादौ जनकत्वमिति। उच्यते। जन्यमात्रे हस्तादिव्यापारजनककृतित्वेन न जनकत्वं चेष्टायां क्षित्यादौ च व्यभिचारात्। घटादौ च तथा जनकत्वमिति जन्यमात्रे कृतिमात्रस्य जनकत्वविरोधिविशेषयोर्जन्य-जनकभावे बाधकं विना सामान्ययोरपि तथाभावनियमात्[१]। न हि विशेषे विशेषप्रयोजकत्वं सामान्ये सामान्यप्रयोजकत्वविरोधि। चेष्टेतरकार्य्ये शरीरव्यापारद्वारैव कृतेर्हेतुत्वात् तेन विना क्षित्यादौ न कृतिसाध्यतेति चेत्।

---

प्रत्युतानुकूलत्वमित्याह, 'विशेषयोरिति।

---

(१) तथाच यत्र विशेषयोर्जन्य-जनकभावे बाधकमस्ति तत्रैव न सामान्ययोर्जन्य-जनकभाव', प्रकृते कार्य्यविशेष-कृतिविशेषयोर्जन्य-जनकभावे बाधकाभावात् कार्य्यसामान्य कृतिसामान्ययोर्जन्य-जनकभावोनिष्प्रत्यूह इति भावः।

न। चेष्टेतरकार्य्यमात्रे शरीरव्यापारजनककृतित्वेन न जनकत्वं क्षित्यादौ व्यभिचारात्, किन्तु तद्विशेषे घटादावित्युक्तत्वात्। न चैवमामवातजडीकृतकलेवरस्य प्रयत्नादेव घटोत्पत्तिः स्यात् हस्तादिव्यापारं विनाऽपि कृतेर्हेतुत्वादिति वाच्यम्। घटे कृतिवत् हस्तादिव्यापारस्यापि हेतुत्वात्। यदुक्तं क्षेत्रज्ञ एव कुतो नानुमीयत इति। तत्र यदि हस्तादिव्यापारकृतिमान् क्षेत्रज्ञोऽभिमतस्तदा हस्तादिव्यापारस्याङ्कुरे योग्यानुपलम्भबाधात्। अथ हस्तादिव्यापारशून्यकृतिमान् अभिमतस्तदेष्टमित्युत्तरम्,[1] स एव भगवानीश्वरः। अत एव सहभावनिरूपकत्वे नियतपूर्व्ववर्त्तित्वं[2] कारणत्वम्। समवाय्यसमवायिनोस्तथात्वेन निमित्तेऽपि तथाभावात्[3]। अन्यथा[4] प्रतिबन्धकाभावानन्तरं प्रतिबन्धकसत्त्वकाले कार्य्यं स्यात् प्रतिबन्धकाभावस्य

---

'प्रतिबन्धकेति, सम्बन्धाभावत्वेन जनकत्वात् प्रागभावस्यापि जनक-

---

(१) तदेष्टमित्युच्यत इति ख०।

(२) कार्य्याधिकरणकालवृत्तित्वे सति कार्य्यनियतपूर्व्ववर्त्तित्वमित्यर्थः।

(३) समवायिकारणासमवायिकारणयोः कार्य्याधिकरणकालवृत्तित्वविशिष्टकार्य्यनियतपूर्व्ववर्त्तित्वरूपकारणत्वेन निमित्तकारणेऽपि तादृशकारणत्वादित्यर्थः।

(४) निमित्तकारणस्य कार्य्यनियतपूर्व्ववर्त्तित्वमात्ररूपकारणत्व इत्यर्थः।

पूर्व्वं सत्त्वात्। न च कृतेः सहभावनिरूपकत्वं स्वतः,[1] कार्य्यसमये अभावात्, तथाच तत्परिचायितव्यापारद्वारा तस्याः सहभावनिरूपकत्वं। अतः शरीरव्यापारद्वारैव कृतेर्जनकत्वं न केवलाया इति निरस्तम्। समवाय्यसमवायि-प्रतिबन्धकाभावानां अविनश्यदवस्थत्वेन कारणत्वात् तथैवान्वय-व्यतिरेकात्। तेन तेषामग्रिमविनाशप्रसङ्गे[2] न कार्य्यम्। अन्यथा प्रतिव्यक्ति कार्य्यसहभावनिरूपणे कार्य्योत्पत्तेः प्राक् सहभावस्य निरूपयितुमशक्यत्वात् कारणत्वानिश्चयेन क्वापि प्रवृत्तिर्न स्यादिति तज्जातीयत्वस्यावश्यवाच्यत्वे विनश्यदवस्थं कथं सहभावेनापि व्यवच्छेद्यमतः स्वरूपयोग्यतारूपा कारणता तत्रापि। कार्य्याभावस्तु सहकारिविरहात्। अन्यथा निमित्तानां प्रत्येकं

---

त्वादिति भावः। 'समवायीति, तेषामेव तथा हेतुत्वं न त्वन्येषामिति भावः। 'निमित्तानामिति, सामान्यतो लाघवात् पूर्वसत्ताविशेष एव हेतुताऽतिप्रसङ्गभयेन विशेषेष्वेवमिति भावः। एतच्च वस्तुगतिमनुरुध्योक्तं, वस्तुतः सहभावगर्भेऽपि हेतुत्वे यत्र सहभावो न स्वतस्तत्रास्तु

---

(१) साक्षात्सम्बन्धेनेत्यर्थः।

(२) तेषामाश्रये विनाशच्छाया इति ख०।

कार्य्यसहभावनिरूपकत्वेन जनकत्वे गौरवम्, प्रागभावस्य[१] प्रतियोग्यजनकत्वप्रसङ्गाच्च। अन्यथा[२] उत्पन्नोऽपि घट उत्पद्येत सामग्र्याः सत्त्वात्। न च स एव तत्र प्रतिबन्धकः, अभावान्तरस्य[३] तत्राकारणत्वेन कारणीभूताभावप्रतियोगित्वरूपस्य प्रतिबन्धकत्वस्य प्रागभावकारणत्व एव विश्रामात्। न चैका सामग्री एकदैकमेव कार्य्यं जनयति स्वभावादिति वाच्यम्। सामग्री-तदितरत्वस्य कार्य्य-तदभावप्रतियोगित्वेन[४]

---

हस्तादिव्यापारद्वारा तथा, इह तु नियमतः स्वत एव कार्यसहभावोऽस्तु किन्तदपेक्षयेति द्रष्टव्य। इष्टापत्तिमाशङ्क्य प्रागभावहेतुताग्राहकमानमाह, 'अन्यथेति, कार्याभावव्यापकाभावप्रतियोगित्वस्यैव हेतुत्वे मानत्वादिति भावः। 'एकदेति, 'एकमिति सम्पातायात

---

(१) सर्वत्र कार्य्यसहभावेन कारणत्वे प्रागभावस्य प्रतियोग्युत्पत्तिकाले असत्त्वेन अकारणत्वप्रसङ्ग।

(२) प्रागभावस्याकारणत्वे इत्यर्थः।

(३) घटं प्रति घटस्य प्रतिबन्धकत्वे घटाभावस्य कारणत्वमायाति कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वारूपत्वात् तथाच घटं प्रति घटप्रागभावभिन्नस्य घटाभावस्य निर्युक्तिकत्वेनाकारणत्वे परिशेषेण घटप्रागभावस्य कारणत्वं सिद्धमिति समुदिततात्पर्य्यम्।

(४) कार्य्य-तदभावप्रयोजकत्वेनेत्यर्थः· कस्मिंश्चित् पुस्तके तथैव पाठोऽवर्त्तत इति।

सामग्र्यां सत्यां[१] कार्य्यस्य तदभावे सामग्रीविरहस्य वज्रलेपायितत्वात्। स्यादेतत्, कर्त्ता शरीर्य्येव ज्ञानमनित्यमेव बुद्धिरिच्छाद्वारैव इच्छा कृतिद्वारैव हेतुरित्यादिप्राथमिकव्याप्तिप्रत्यक्षविरोधान्नाशरीरनित्य-

एकदैव जनयतीत्यनेनैव प्रकृतसङ्गतेरिति। इदञ्च कार्य्योत्पत्तिविरहो यदभावात् तत्कारणमिति मते। वस्तुतस्तु साध्यप्रतियोगिकत्वं साधनत्वं, न च साध्यत्वमित्थं वाच्यं, यस्याभावादुत्पत्तिविरह इत्यादिप्रागभावे कृत्यसाध्यतापत्तेः, किन्तु यदभावादुत्तरसमये यदभावो यत्सत्त्वे च यदा यत्सत्त्वमित्यादि। न च प्रागभावविरहात् कदापि कार्य्यविरहः, उत्पत्त्यग्रिमसमयेऽपि कार्य्यसत्त्वात्। किञ्च उत्पत्तिराद्यसमयसम्बन्धः स चाद्यसमयः कार्य्यञ्चेति द्वयमेव, तथाचोत्पत्त्यभाव आद्यसमय-तत्कार्य्ययोरभावः पर्य्यवस्यति स च न प्रागभावविरहात् अपि तूत्तरकाले आद्यसमयाभावादेव तद्विशिष्टाभावो व्यासज्यवृत्तिवृत्तिप्रतियोगिकस्तदुभयाभावो वा उभयथापि तादृशसमयाभावादेवेति किं तत्र प्रागभावाभावेन, तस्माद्यदभावात् स्वेतरसमवधाने यदभावस्तदेव तत्र कारणमिति वाच्यं। यदभावश्च न कालमात्रगर्भः किन्तु देशगर्भोऽपि प्रदेशान्तरे सत्यपि दण्डादौ घटविरहात्, तथाच दण्ड-चक्रसमवधाने यत्तत्र व्यधिकरणघटा-

(१) तथाच घटोत्पत्त्यनन्तरं घटस्य पुनरुत्पत्त्यभावेनानुमितः सामग्रीविरहः यत्कारणाभावप्रयुक्तः तस्य स्वातन्त्र्येण कारणत्वमकामेनाप्यङ्गीकरणीयमिति समुदिततात्पर्य्यम्।

ज्ञानादिकर्तृसिद्धिः। अत एव शरीरमनित्यमेवेति नियमाच्च कर्तृत्वेन नित्यातीन्द्रियशरीरसिद्धिरीश्वरे। न चाप्रयोजकत्वम्, निरुपाधित्वेन शङ्काकलङ्काभावात् कार्यत्व-सकर्तृकत्वयोरपि यदि निरुपाधित्वमस्ति तदापि तुल्यबलत्वेन सत्प्रतिपक्षवत्प्रतिरोधोऽस्तु[1]। न

---

भावः तत्र प्रागभावाभावादन्यस्य नियामकस्याभावादायातं प्रागभावकारणत्वं। अत एव सर्वप्रागभावः सर्वत्रास्ति क्वचित्र सहकारिसमवधानात्कार्यं जनयतीति कस्यचित् प्रलपितमनादेयं। धर्मिग्राहकमानेन नियताधिकरणस्यैव सिद्धेः अन्यथा तदभावेन कार्याभावस्यासम्भावितत्वेन तत्कारणत्वाभावापत्तेः धर्म्यसिद्ध्यापत्तेर्वा। न च व्यधिकरणघटस्य तत्समवाय्येव नेति कथं तत्र व्यभिचारोऽव्याप्तिरिति वाच्यं। कारणतावच्छेदकावच्छिन्नयत्किञ्चित्तत्त्वस्य कार्यतावच्छेदकावच्छिन्नयत्किञ्चित्त्वप्रयोजकत्वात्। सामान्येनापि रूपेण सैव व्यभिचारस्फुर्तोपस्थितेति चेत्, सत्यं, तदेव प्रागभावव्यतिरेकात् फलव्यतिरेकं विना न सम्भवतीत्यन्यस्य तन्नियामकस्याभावात्। स्वभावादेव तथात्वे सहकारिकल्पनादेरपि दुरुपपादत्वापत्तिः प्रकारान्तराभावे तस्यैव स्वभावाश्रयणात्। न च कपालत्वादिना सर्वकपालानां सर्वघटान् प्रतीव प्रागभावत्वेन सर्वप्रागभावानामपि सर्वान् प्रति जनकत्वमिति व्यधिकरणघटाभावो न प्रागभावाभावादिति वाच्यं। स्वप्रागभाव-

---

(२) प्रतिबन्धोऽस्त्विति ख० ।

च कार्य्यत्वं पक्षधर्म्मतासत्त्वाद्बलीयः कर्त्ता शरीर्य्येवे-त्यादौ तु तन्नास्तीति वाच्यम्। ज्ञानमनित्यमेवेत्यादि-व्याप्तेरेव क्षित्यादौ ज्ञानजन्यत्वविरोधित्वात् एवं कार्य्यं ज्ञानजन्यं ज्ञानमनित्यमेवेत्यनयोर्विरोध एव अविरोधे तु द्वयमपि स्यात्, तथाच क्षित्यादौ शरीर्य्यनित्यज्ञान-पर्य्यवसाने बाध एव। किञ्च ज्ञानमनित्यमेवेत्यादौ नित्य-ज्ञानादेरप्रसिद्धेस्तद्व्यावर्त्तकतया नोपाधित्वनिश्चयः तत्संशयो वा, कार्य्यत्व-सकर्तृकत्वव्याप्तिग्रहदशायां शरी-रव्यापाराव्यभिचारादुपाधेर्निश्चयः संशयो वास्तीति। तन्न। ज्ञानमनित्यमेवेत्यादिव्याप्तेरसिद्धेः। विपक्ष-बाधकाभावेनाप्रयोजकत्वात्। निरुपाधिसहचारद-र्शन-व्यभिचारादर्शनादेव व्याप्तिग्रहः निरुपाधित्वमेव वा विपक्षबाधकमिति चेत्। न। अवयवो महानेव तेज उद्भूतरूपमेवेत्यादिव्याप्तिग्रहात् परमाणु-नय-नादेरसिद्धिप्रसङ्गात्। अथ द्रव्यचाक्षुषत्वे अनेकद्रव्य-वत्त्वस्य साक्षात्कारविषयेन्द्रियसन्निकर्षस्य हेतुत्वात् तन्मूलकविपक्षबाधकेन परमाण्वादिसाधकस्य बलव-त्त्वात् परमाण्वादिसिद्धौ विरोधिव्याप्तेर्बाधः न तु वैपरीत्यम्। विपक्षबाधकाभावेन तस्या बलवत्त्वादिति मन्यसे तर्हि ज्ञानादिकार्य्ययोः कार्य्य-कारणभावावधा-

रणात् तन्मूलकविपक्षबाधकेन निष्कलङ्कव्याप्तिग्रहात्[1] पक्षधर्मताग्रहसहितान्नित्यज्ञानादिसिद्धौ व्यभिचारान्न व्याप्तिः। अन्यथा साध्यं पक्षातिरिक्त एवेत्यादिनिरुपाधिसहचाराद्व्याप्तिग्रहे सकलानुमानोच्छेदः। वयन्तु ब्रूमः। पक्षधर्मताबलान्नित्यं ज्ञानं सिद्ध्यद्बुद्धिरनित्यैवेति व्याप्तिप्रत्यक्षेण न प्रतिबध्यते अस्मदादिबुद्धिमात्रविषयकत्वेन भिन्नविषयत्वात् एकविषयविरोधिज्ञानस्यैव प्रतिबन्धकत्वात् नित्यत्वानित्यत्वयोरेकजातीयद्रव्येऽविरोधात्। बुद्धिमात्रेऽनित्यत्वावधारणात् कथं तद्विशेषे नित्यत्वबुद्धिरिति चेत्। न। बुद्धिमात्रपदस्येश्वरानीश्वरबुद्धिपरत्वे विरोधाद्व्यभिचाराच्च। अस्मदादिबुद्धिमात्रपरत्वे भिन्नविषयत्वेनाप्रतिबन्धकत्वात्।

---

तेनैव जनकत्वाभ्युपगमे सर्वथामन्त्रस्यादिति। 'वयन्त्विति, सामान्यलक्षणानभ्युपगमेन भिन्नविषयतया तन्मते न प्रतिबन्धकत्वमिति भावः। न चैवं बाधोऽपि दोषो न स्यादिति वाच्यं। अस्माकपरस्य तन्मतेऽनिष्टापादनपक्षत्वेनास्माकं क्षत्यभावात्। न चास्माकं सामान्यलक्षणाभ्युपगमेन का गतिरिति वाच्यं। विपक्षबाधकाभावेन व्याप्त्यभावादप्रतिबन्धात्। न च समानप्रकारत्वेव विरोधे तन्त्रं, विरोधाभासानुरोधेन समानविषयतावच्छेदेन विरोधादिति।

---

(१) व्यापकीभावाभावाग्राहकव्याप्तिग्रहादित्यर्थः।

बुद्धित्वं नित्यावृत्त्येवेत्यवगतमतः कथं तत्र नित्यवृत्तित्वावगमइति चेत्। न। उभयसिद्धनित्यावृत्तित्वावगमेऽप्यतिरिक्तनित्यवृत्तित्वावगतौ विरोधाभावात्[१]। बुद्धित्वमनित्यत्वव्याप्यमवगतं नानित्यत्वाभाववति ज्ञेयमिति चेत्। न। अनित्यत्वव्याप्यत्वमनित्यमात्रवृत्तित्वं तच्च चोक्तमेव। एतेन कर्त्ता शरीर्य्येवेत्याद्यपि ज्ञानं प्रतिबन्धकमित्यपास्तम्। ननु कर्तृजन्यत्वे जन्यत्वं नावच्छेदकं किन्तु घटत्वादिकमेव तेनैव रूपेणान्वय-व्यतिरेकग्रहादावश्यकत्वाच्च[२] अननुगतमपि जन्यतावच्छेदकं

'अथ घटत्वादिवदिति यथा घटत्वादि कर्तृविशेषजन्यत्वे तथा सामान्ये जन्यत्वं स्यादित्यर्थः, न तु कर्तृजन्यतावच्छेदकमेव घटत्वं

(१) परैः नित्यज्ञानानभ्युपगमात् नित्यज्ञानं नोभयसिद्धनित्यान्तर्गतं तथाच बुद्धित्वस्य उभयसिद्धं यद्यत् नित्यं तदवृत्तित्वनिश्चयेऽपि नैयायिकमात्रसिद्धनित्यज्ञानवृत्तित्वे विरोधाभावः। न च बुद्धित्वस्य नित्यवृत्तित्वसामान्याभावनिश्चये कथं नित्यविशेषवृत्तित्वग्रहः सम्भवति सामान्याभाववत्तानिश्चयस्य सामान्यघटितविशेषवत्ताबुद्धेः प्रतिबन्धकत्वादिति वाच्यं। नित्यत्वस्यानुगतैकरूपस्याभावेन सामान्याभावनिश्चयासम्भवादिति विभावनीयं।

(२) जन्यत्वावच्छिन्नं प्रति कर्तृत्वेन कारणत्वमिति कार्य्य-कारणभावाङ्गीकारेऽपि पटादिकर्त्तरि विद्यमाने घटादिकार्य्योत्पत्त्यापत्तेरवारणात् घटत्वाद्यवच्छिन्नं प्रति कुलालत्वादिना कार्य्य-कारणभावस्यावश्यकत्वादित्यर्थः।

वह्निजन्यतायां धूमत्वादिवत्। अथ घटत्वादिवज्जन्यत्वमप्यवच्छेदकम्। न हि विशेषोऽस्तीति सामान्यमप्रयोजकम्। तथाच वह्निजन्यत्वे धूमविशेषः प्रयोज्योऽस्तीति न धूमसामान्यमग्निं गमयेत्[1] तस्माद्यद्विशेषयोः कार्य्य-कारणभावस्तत्सामान्ययोरपि बाधकं विना तथात्वनियम इति चेत्। न। तत्र बाधकाभावात् अत्र च ज्ञानमनित्यमेवेत्यादिप्राथमिकबहुव्याप्तिबाधात् तुल्यत्वे वा व्याप्तिसंशयाधायकत्वात्। न च कार्य्य-कारणभावमूलकत्वेन कार्य्यत्व-सकर्तृकत्वव्याप्तिर्बलीयसीति[2] वाच्यम्। विरोधिप्रत्यक्षेण कार्य्य-कारणभावस्यैवासिद्धेः। एतेन धूमादौ वह्निजन्यतावच्छेदकमनुगतं न सम्भवतीह तु जन्यत्वमनुगतमस्त्यतो बाधकं

---

यषेति विरोधात् एकजन्यतायामवच्छेदकद्वयाभावाद्यद्विशेषयोरित्याद्यनियमप्रदर्शनाच्च। 'वह्निजन्यत्वे' वह्निविशेषजन्यत्वे, 'विरोधीति

---

(१) तथाच धूमत्वस्य वह्निजन्यतानवच्छेदकत्वे धूमो यदि वह्निव्यभिचारी स्यात् तदा वह्निजन्यो न स्यादिति विपक्षबाधकतर्कासम्भवेन धूमत्वावच्छिन्नहेतुना वह्नित्वावच्छिन्नस्यानुमानं न सम्भवतीति भाव।

(२) कार्य्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात् तदा कृतिजन्यतावच्छेदकं न स्यात् अनतिप्रसक्तधर्मस्यैवावच्छेदकत्वात् इति विपक्षबाधकतर्कसहकृतायाः कार्य्यत्व-सकर्तृकत्वव्याप्तेः बलीयस्त्वमिति हृदयम्।

विना न त्यज्यत इति परास्तम्। ज्ञानमनित्यमेवेत्यादिसहचारावसायस्य बाधकं विना व्याप्तिपर्य्यवसायिततया बाधकत्वादिति। मैवम्। निरुपाधित्वेन सहचारावसायस्य साधकं बाधकञ्च विना साधारण्येन व्याप्तिसंशयाधायकत्वात्। अन्यथा साध्यं पक्षातिरिक्त एव सुखं दुःखसम्भिन्नमेवेत्यादिव्याप्तिग्रहस्य कार्य्य-कारणभावग्राहकबाधकत्वे तत्संशयाधायकत्वे वा कार्य्यात्कारणानुमानोच्छेदे निरीहं जगज्जायते। तस्माद्यद्विशेषयोः कार्य्य-कारणभावस्तत्सामान्ययोः कार्य्य-कारणभावोबलवता बाधकेनापनीयते, न चात्र तदस्ति। विरोधिव्याप्तिसाधकस्य विपक्षबाधकस्याभावात्।

नव्यास्तु कार्य्यं कर्तृजन्यमिति व्याप्तितोऽशरीरनित्यज्ञानकर्त्तृपस्थितौ ज्ञानमनित्यमेवेत्यनेन विरोधप्रतिसन्धानं न तु तां विना प्रतियोग्यनुपस्थितौ विरोधानिरूपणात्, तथाचोपजीव्यबाधात् ज्ञानम-

विरोधिव्याप्तिप्रत्यक्षेणेत्यर्थः, 'नव्या' इत्यस्वरमोद्भावनं, तद्बीजन्तु ज्ञानमनित्यमेवेत्यस्य विरोधिप्रतियोग्युपस्थितौ विरोधज्ञानमिति सत्यं परन्तु तर्कितं तन्न प्रमितमिति नोपजीव्यविरोधः, अन्यथा सत्प्रतिपक्षादौ क्वापि प्रतिबन्धो न स्यात् पक्षीयसाध्यानुपस्थितौ

नित्यमेवेत्यादिव्याप्तिज्ञानमकिञ्चित्करमेव। अत एव पक्षधर्म्मताविनाकृतं विरोधिव्याप्तिज्ञानं न हेत्वाभासस्तयोक्तं विरोधप्रतियोगिसिद्धासिद्धिपराहतत्वात्। स्यादेतत् अस्तु शरीरजन्यत्वमुपाधिः। न च पक्षेतरत्ववत्पक्षमात्रव्यावर्त्तकविशेषणवत्त्वात्[1] साधनविशेषितत्वात् साधनतुल्ययोगक्षेमत्वेन साध्यव्यापकत्वानिश्चयाच्च नोपाधित्वमिति वाच्यम्। चेष्टेतरकार्य्ये[2] शरीरव्यापारद्वारैव कर्त्तुः कारणत्वात् शरीरसहकृतस्यैव स्वकार्य्ये कारणत्वाच्च[3]। न हि शरीरविनाकृतः कर्त्ता शरीरक्रियां चेष्टां घटादिकं वा जनयति। न च यत्सहकृतं यज्जनकं तेन विना तज्जनकमतोऽर्थाच्छरीरजन्यमेव कर्तृजन्यमिति साध्यव्यापकत्वनिश्चयात्,

---

नित्यानित्ययोरप्रतिषेधात्। यत्तु अन्यथा सर्व हेत्वाभासान्तरमापातइति, तन्न, तादृशव्याप्तिविरोधेन कार्यं सकर्तृकमिति व्याप्ति-

---

(१) पक्षमात्रव्यावर्त्तकं यत् शरीरं तद्वत्त्वादित्यर्थः, तथाच अनुमानमात्रोच्छेदभिया पक्षेतरत्वस्य यथा नोपाधित्वं तथा पक्षमात्रव्यावर्त्तकविशेषणविशिष्टस्यापि नोपाधित्वमिति भावः।

(२) चेष्टायाः शरीरव्यापारत्वेन स्वस्मिन् स्वस्य कारणत्वासम्भवेनोक्तं चेष्टेतरेति।

(३) कारणत्वावधारणाच्चेति ख०।

पक्षेतरत्वादौ च विपक्षबाधकाभावान्न साध्यव्यापकता-निश्चयइति तेषामनुपाधित्वे वीजम्। अत एव बाधोन्नीतं वह्नीतरत्वं वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वं रसवत्त्वेन गन्धवत्त्वे साध्ये पृथिवीत्वमुपाधिः विपक्षबाधकैस्तेषां साध्यव्यापकत्वनिश्चयात्। न च साधनविशेषितत्वमपि, जन्यत्वं हि प्रागभावप्रतियोगित्वं, शरीरजन्यत्वञ्च शरीरकारणकत्वमन्यानिरुक्तेः इतरपदसमभिव्याहारेण जन्यपदादितरकारणकस्यैव प्रतीतेः तदर्थकत्वकल्पनादिति विधौ वक्ष्यते। अत एव शरीरिकर्तृकत्वमुपाधिः शरीरसहकृतस्यैव कर्तुः कारणत्वात्, व्याप्यं व्यापककोटावनिवेशयत एव प्रमाणस्य व्याप्तिग्राहकत्वात्, शरीरिकर्तृकत्व-सकर्तृकत्वयोर्न व्याप्तिग्रहः[१] इति चेत्। न। विशिष्टाविशिष्टभेदेन[२] व्याप्य-व्यापकभावाविरोधात्।

---

(१) स्वस्य स्वव्याप्यत्ववारणाय स्वाभाववदवृत्तित्वे सति स्वभिन्नत्वस्य व्याप्यत्वरूपत्वात् शरीरिकर्तृकत्वानतिरिक्तस्य सकर्तृकत्वस्य शरीरिकर्तृकत्वव्याप्यत्वासम्भव इति तात्पर्य्यं।

(२) विशिष्टाविशिष्टभेदेन विशिष्टस्य केवलातिरिक्तत्वेनेत्यर्थः, एतच्च विशिष्टस्य केवलातिरिक्तत्वमतमाश्रित्योक्तं। वस्तुतस्तु विशिष्टस्य केवलातिरिक्तत्वेऽपि विशिष्टाविशिष्टयोः भेदगर्भव्याप्य-व्यापकभावनिर्व्वाहः सम्भवति, भेदगर्भव्याप्यत्वञ्च न स्वावच्छिन्नप्रतियोगिताक-

अत एव जन्यत्वेन कारणजन्यत्वमनुमेयमिति। मैवम्। कर्तुर्हि शरीरसहकारिता किं घटादौ कर्त्तव्ये, कार्यमात्रे वा स्वकार्ये वा, आद्ये कर्त्ता शरीरं विना घटादिकं न करोतीति किमायातं कर्त्तुः कार्यमात्रकरणे। द्वितीये तु कार्यमात्रं कर्तृजन्यमिति न त्वया स्वीक्रियते, स्वीकारे वा शरीराजन्यमपि कार्यं कर्तृजन्यमिति साध्याव्यापकत्वम्। तृतीये तु स्वजन्यत्वं न स्वजन्यतावच्छेदकं आत्माश्रयात्। तथापि यत्र सकर्तृकत्वमस्ति तत्र शरीरजन्यत्वमावश्यकमिति तस्य साध्यव्यापकत्वम्, तुल्ययोगक्षेमत्वेन हेतुव्याप्यतार्हग्राह्यग्राहकत्वेन सन्दिग्धोपाधित्वं वेति चेत्। न।

---

ग्राह्याभावात् अप्रसिद्धिमध्यपरेग्रस्तेबोधिततादित्यादि। 'अतएव जन्यत्वेनेति, अत्र कारणजन्यत्वं किञ्चित्प्रागभावव्यापकाभावत्वमतियो-

---

भेदवत्त्वे सति स्वावच्छिन्नाभाववद्वृत्तित्वं, अपि तु स्वावच्छिन्नाविनाशकप्रतीतिविषयतावच्छेदकत्वे सति स्वावच्छिन्नाभाववद्वृत्तितावच्छेदकधर्मवत्त्वं, तथाच स्वावच्छिन्नस्य न स्वावच्छिन्नव्याप्यत्वं न वा विशिष्टाविशिष्टयोर्व्याप्यत्वव्याघातः। स्वावच्छिन्नाविनाशकस्य अपव्याप्यावच्छेदकताकविषयताशून्यत्वं, अतः अविशिष्टे विशिष्टव्याप्यत्ववत् विशिष्टेऽपि अविशिष्टव्याप्यत्वनिर्वाह इति न काचिदनुपपत्तिः।

लाघवेन बाधकं विना कर्तृजन्यत्वे हि जन्यत्वमवच्छेदकं न तु शरीरजन्यत्वं गौरवात्, तथाच शरीरजन्यत्वं न सकर्तृकत्वव्यापकं। घटादौ[१] त्वार्थः समाजः घटत्वेन शरीरजन्यत्वनियमात् न तु व्यापकत्वप्रयुक्तः मानाभावात्, शरीरजन्यत्वं न सकर्तृकत्वव्यापकं तद्व्याप्यजन्यत्वाव्यापकत्वात्[२] नित्यत्ववदिति बाधकात् हस्तादिना कर्तृत्वनिर्वाहेण शरीरस्याप्रयोजकतया साक्षात्प्रयत्नाधिष्ठेयजन्यत्वस्य साधनव्यापकत्वाच्च शरीरकर्तृकत्वमपि नोपाधिः। जन्यमात्रे कर्त्तुः शरीरसहकारिताविरहात्।

अथ यद्विशेषयोः कार्य्य-कारणभावस्तत्सामान्ययोरपि बाधकं विना तथा नियम इति त्वयैव निरटङ्कि, तथाच कर्तृविशेष शरीरजन्यविशेषयोः कार्य्य-कारण-

---

गित्वं प्रागभावप्रतियोगित्वमात्रन्तु जन्यत्वमित्यर्थः कर्त्तव्यः, अन्यथा पदान्तरसमभिव्याहारस्य तत्कारणकत्वार्थकत्वे केवलर्थस्य तत्राप्रवेशे

---

(१) ननु शरीरजन्यत्वस्य कर्तृजन्यतानवच्छेदकत्वे घटादौ कथं सकर्तृकत्वेन शरीरजन्यत्वसिद्धिरित्यत आह, घटादाविति, यथाच घटत्वेन शरीरजन्यत्वनियमात् घटादौ शरीरजन्यत्वं फलबलसम्पन्नमिति भावः।

(२) तथाच व्याप्याव्यापकत्वेन व्यापकस्यापि न व्यापकत्वमिति भावः।

भावात् कर्तृमात्र-शरीरजन्यमात्रयोरपि तथाभावः, तथाच शरीरजन्यत्वं कर्तृजन्यतावच्छेदकमिति[1] भवत्युपाधिः। न चैवं घटत्ववच्छरीरजन्यत्वं सकर्तृकत्वव्याप्यं न तु व्यापकमपीति वाच्यम्। उभयसिद्धसकलसकर्तृकवृत्तित्वेन[2] साध्यव्यापकत्वनिश्चयात्। अन्यत्वेऽपि सकर्तृकत्वव्याप्यत्वग्राहकमस्तीति चेत्, तर्हि उभयत्र व्याप्तिग्राहकसाम्ये विनिगमकाभावात् व्याप्तिसंशयाधायकत्वेन सन्दिग्धोपाधिर्व्याप्यत्वासिद्धिर्वा। साधनव्याप्यतासंशयाधायक एव हि सन्दिग्धोपाधिः, स च साध्यव्यापकत्वे साधनाव्यापकत्वे वोभयत्र वा संशयात्। न च वाच्यम् शरीरजन्यत्व-सकर्तृकत्वयोरन्वय-व्यतिरेकग्राहे अन्यत्व-सकर्तृकत्वयोस्तद्ग्रह श्राव-

---

व्याप्यस्य व्यापककोटिप्रवेशेन प्रकृतासङ्गतेः, तथापि वा यदि प्रवेशस्तदा साधनविशेषितत्वमेवोपन्यस्तोपाधेरिति पूर्वग्रन्थविरोध इत्यवधेयं। ननु कर्तुः शरीरसहकारिता स्वजन्यमात्र एव, न चात्माश्रयः,

---

(१) तथाचान्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वात् शरीरजन्यत्वस्य कर्तृजन्यतावच्छेदकत्वे कर्तृजन्यत्वव्यापकत्वमपीति शरीरजन्यत्वस्योपाधित्वनिर्वाह इति भाव।

(२) न्यायमते सकर्तृकत्वस्य क्षित्यङ्कुरादावपि सत्त्वात् शरीरजन्यत्वस्य सकर्तृकत्वव्यापकत्वासम्भवादुक्तं उभयसिद्धेति।

ग्रथक इति लाघवात्तयोरेव व्याप्तिग्रहो न तूपाधिसाध्ययोः, साध्य-साधनयोरन्वय-व्यतिरेकज्ञानञ्च शरीरजन्यत्वानवगमेऽपि भवतीति विनिगमकमिति, यतो न कर्तृमात्र-जन्यमात्रयोरन्वय-व्यतिरेकाभ्यां व्याप्तिग्रहः। कर्तृमात्रस्य व्यतिरेकाभावात्, किन्तु विशेषयोरन्वयव्यतिरेकेण कार्य्य-कारणभावेन वा सामान्ययोस्तथात्वग्रहः तौ च तुल्याविति चेत्, उच्यते, अस्तु तावद्घटत्ववज्जन्यत्व-शरीरजन्यत्वयोरपि कर्तृजन्यतावच्छेदकत्वेन सकर्तृकत्वव्याप्यत्वं ग्राहकतौल्यात्[१] विनिगमकाभावात् विरोधाभावाच्च, सकर्तृकत्वव्यापकत्वन्तु शरीरजन्यत्वस्य कुतः घटत्ववदव्यापकस्यापि जन्यतावच्छेदकत्वात्। उभयसिद्धसकर्तृके अन्वय-व्यतिरेकाभ्यां शरीर-

न हि तत्सत्त्वे फलोपधानेन तत्सहकारित्वं अपि तु तदभावे फलानुपधाननियमेन, तथाच शरीराभावे कर्त्तुः कार्यमात्राभाव एव कर्तृजन्यमात्रे शरीरसहकारितायां मानं। किञ्च स्वजन्यत्वं स्वजन्यतावच्छेदकं नोक्तमेव किन्तु शरीरं स्वजन्यमात्रे सहकारीति स्वजन्यत्वं शरीरजन्यतावच्छेदकमित्यस्वरसाद्दोषान्तरमाह, 'हस्तादिनेति, शरीरस्याप्रयोजकतयेत्यापाततः, वस्तुतोऽन्त्यावयविभागस्य व्यर्थतया साक्षात्प्रयत्नाधिष्ठेयजन्यत्वमेव तदर्थो वाच्यः तथासतीदं दूषणं द्रष्टव्यं।

(१) ग्राहकसमानत्वादिति ख०।

जन्यत्वस्य व्यापकत्वग्रह इति चेत्, न, शरीरजन्यत्वविनिवेद्यत्वेन तुल्यन्यायेन च प्रथमं कर्तृजन्यत्वे जन्यत्वमवच्छेदकं क्लृप्तमिति तद्विरोधेन शरीरजन्यत्वस्य सकर्तृकत्वव्यापकत्वानवगमात्। अत एव न सन्दिग्धोपाधित्वम्। ननु घटादौ शरीरजन्यत्वे कर्तृजन्यत्वमनुगतमवच्छेदकम् बाधकाभावात्। न च लाघवात् घटत्वादिकमेव तथा, कर्तृजन्यत्वेऽपि जन्यत्वस्यातथात्वापत्तेः। एवं शरीरजन्यत्वव्याप्यं सकर्तृकत्वं वह्नेर्धूमइवेति भवत्युपाधिः। किञ्च कर्तृजन्यत्वे जन्यत्वं शरीरजन्यत्वे वा सकर्तृकत्वमवच्छेदकमिति संशयेऽपि न हेतोः साध्यव्याप्यत्वनिश्चय इति चेत्, तर्हि, घटादौ कर्तृजन्यत्वे गृहीते तस्य शरीरजन्यत्वावच्छेदकत्वं ग्रहीतव्यम् घटे च घटत्ववज्जन्यत्वमपि बाधकं विना कर्तृजन्यतावच्छेदकं गृहीतमतो जन्यमात्रे कर्तृजन्यत्वात् न शरीरजन्यत्वे तदवच्छेदकत्वं प्रथमगृहीतोपजीव्यविरोधात्। अत एव न तस्य हेतौ व्याप्तिसंशयाधायकत्वमपि। एतेनानणुत्व-क्षित्यवयवद्व्यन्यत्वादय उपाधित्वेन निरस्ताः, जन्यत्वस्य साध्यव्याप्यत्वेन तेषां साध्याव्यापकत्वात्। तथापि क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् गगनवदिति सत्प्रतिपक्षोऽस्त्विति चेत्।

न। अस्य प्रसिद्धकर्तृजन्यत्वाभावविषयत्वात् अप्रतीतप्रतियोगिकाभावस्य निरूपयितुमशक्यत्वात्(१), स्थापनानुमानञ्च पक्षधर्मताबलात् प्रसिद्धकर्तृभिन्नकर्तृत्वसाधकमतो भिन्नविषयत्वान्न प्रतिबध्य-प्रतिबन्धकभावः। अत एव तद्व्यापकरहितत्वादिकमभावसाधकं बाधकमपास्तम्। तस्य प्रसिद्धाभावविषयकत्वेनाप्रसिद्धाभावाविषयकत्वात् व्यक्तिसाधकस्य च विशेषतोऽप्रसिद्धव्यक्तिसाधकत्वनियमात् अन्यथानुमानवैयर्थ्यात्। कर्तृजन्यत्वमनुगतं घटादौ प्रसिद्धं यत्साध्यं तदभावो मया साध्यत इति चेत्, कर्तृजन्यत्वमनुगतमपि पक्षधर्मताबलेनाप्रसिद्धं कर्तारमादाय पर्यवस्यति तदभावस्तु प्रसिद्धस्य कर्तुरभावमादाय सिध्यति नाप्रसिद्धस्य अनुगतस्यापि, कर्तृजन्यत्वस्य तदभावस्य च कर्तृव्यक्तिघटितत्वात्। अन्यथा व्यक्ति-तदभावासिद्धिप्रसङ्गात्। न चैवं सत्प्रतिपक्षोच्छेदप्रसङ्गः, तस्य-

---

'अस्य प्रसिद्धेति, इदञ्च सर्वं सामान्यलक्षणानभ्युपगमेन पूर्वं प्रत्यापादनमित्युक्तमेव स्मर्तव्यन्तस्य गोलाद्येकव्यक्तिविषयकत्वेन त्वयाऽवश्यं

---

(१) तथाच क्षितिरकर्तृका शरीराजन्यत्वादित्यनुमानस्य कर्तृविशेषजन्यत्वाभावसाधकत्वेन क्षितिः सकर्तृका कार्यत्वादिति कर्तृसामान्यजन्यत्वसाधकानुमानप्रतिबन्धकत्वाभावात् न सत्प्रतिपक्ष इति भावः।

गोत्वाद्येकभावाभावसाधकविपयत्वात्। एतेन ज्ञानत्वं न नित्यवृत्ति ज्ञानमात्रवृत्तिजातित्वात्[1] स्मृतित्ववत्, ज्ञानं न नित्यगुणवृत्तिगुणत्वव्याप्यजातियोगि चेतनविशेषगुणत्वात्[2] सुखवत्, आत्मा न नित्यविशेषगुणाधारवृत्तिद्रव्यत्वापरजातिमान्[3] विभुत्वात् गगनवत् इत्यपास्तम्। प्रसिद्धे नित्ये व्योमादौ प्रसिद्धायाश्च रूपत्व-जलत्वादिजातेर्व्यतिरेकविषयत्वादप्रयोजकत्वाच्च।

---

शब्दत्वादित्येवमर्थकतया परस्मिन्नेव तथेत्यादिफक्किका योज्येति न स्वसिद्धान्तविरोधः। 'ज्ञानमात्रेति, जातिपदमत्र यदि तदा अनित्यमात्रवृत्तीति साध्यार्थो ज्ञानातिरिक्तावृत्तित्वञ्च हेत्वर्थो विवक्षणीयस्तथाचावृत्तौ व्यभिचारवारणाय तदिति द्रष्टव्यं। 'आत्मेति, यद्यपि न नित्यविशेषगुणाधार इत्येव वक्तुमुचितं तथापि तन्मते शब्दस्य नित्यतया आकाश एव व्यभिचारः स्यात्, अस्मन्मतेऽपि परमात्मनः सिद्धासिद्धिव्याघातेनापत्ततया जीवात्मनामेव पक्षत्वे- लोकबाधे सिद्धसाधनं मा भूदतस्तादृशजातिगर्भं साध्यमुपात्तमिति मन्तव्यं। परमते नेदं दूषणं तान् प्रति व्याघातपर्यवसन्नमतोऽपरितुष्यन्

---

(१) ज्ञानमात्रवृत्तिधर्मत्वादिति ख०। अयमेव पाठः समीचीनः जातिपदोल्लेखस्य निष्प्रयोजनत्वादिति।

(२) परममहत्त्वमादाय व्यभिचारवारणाय विशेषपदं।

(३) द्रव्यत्वापरजातिमान् द्रव्यत्वव्याप्यजातिमानित्यर्थः। नित्यविशेषगुणः जलीयपरमाणुवृत्तिरूपं तदाधारः जलीयपरमाण्वादि तद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति साध्यप्रसिद्धिः।

किञ्च क्षित्यादौ शरीराजन्यत्वमसिद्धम् अदृष्टद्वारा तज्जन्यत्वात्। न चादृष्टाद्वारकजन्यज्ञानाजन्यत्वं हेतुः; ज्ञाने जन्यत्वविशेषणस्याव्यावर्त्तकत्वेन व्यर्थत्वात्। न च स्थापनायां पक्षविशेषणेऽप्ययं दोषः, प्रमेयो घट इतिवदुपरक्तबुद्धेरुद्देश्यत्वात्। अपि च शरीराजन्यत्वे व्यर्थविशेषणत्वं लाघवेनाजन्यत्वस्यैव व्याप्यत्वात् न तु निष्प्रयोजनविशेषणवत्त्वमसिद्धम् व्याप्तिग्रहोपयुक्तविशेषणवत्पक्षधर्म्मतोपयुक्तविशेषणस्यापि ज्ञनकत्वात् व्यभिचारवारकस्यापि सार्थकत्वे अनुमितिप्रयोजकत्वस्यैव तन्त्रत्वात्। व्यभिचारवारकविशेषणवत्येव व्याप्तिग्रह इति चेत्। न। निर्विशेषणेऽपि गोत्वादौ व्याप्तिग्रहात्। तत्रापि व्यक्तिविशिष्टे व्याप्तिग्रह इति चेत्। न।

---

दोषान्तरमाह, 'किञ्चेति। नन्वचाप्यदृष्टाद्वारकशरीराजन्यत्वादिति हेत्वर्थपर्यवसानेन निर्दोषतयोक्तदोषेऽपरितुष्यन्नाह, 'अपि चेति, अत्र शरीरपदं भोगायतनादिपरमवगन्तव्यमन्यथा साक्षात्प्रयत्नाधिष्ठेयपरत्वे प्रागुक्तन्यायेनासिद्धेरुक्तिसम्भवाभावादिति। 'निर्विशेषण इति व्यभिचारवारकविशेषणशून्य इत्यर्थः, 'गोत्वादावित्युपलक्षणं, प्रसिद्धानुमाने धूमादावपि तथा द्रष्टव्यं, न हि तद्विशेषणं धूमत्वाद्यपि व्यभिचारवारकतयोपयोगि, तत्तद्व्यक्तिविशेषस्याप्यव्यभिचारात्, किन्त्वगमकतयेति। 'व्यक्तिविशिष्ट इति व्यक्तिविशेषणके व्यक्तिव्यावृत्त इति

स्वतोव्यावृत्तगोत्वस्याव्यभिचारात्। अन्यथान्योन्याश्रयात्। अपिच व्यभिचारवारकविशेषणवत्येव व्याप्तिग्रह इत्यप्रयोजकम् सहचारदर्शनादिसत्त्वे तदभावेन व्याप्तिग्रहाविलम्बात्। व्यभिचारावारकविशेषणशून्य एव व्याप्तिग्रह इति चेत्। न। प्रमेयधूमे[1] व्याप्तिग्रहात्। अथ तत्रोपात्तव्यभिचारावारकविशेषणशून्यत्वं विवक्षितम्। न च तत्र प्रमेयत्वं विशेषणमुपात्तमिति

---

यावत्, तथाच व्यक्तिद्वयमात्रवर्त्तिका जातेर्जातं तस्या व्यभिचारवारकत्वं, गोत्वस्य व्यावृत्त्यप्रतीतौ द्रव्यत्वादिनाप्यभेदबुद्धौ यत्र द्रव्यत्वं तत्र गोत्वे प्रत्ययस्याभावेन व्यभिचारबुद्धिसम्भवात् तद्वारकत्वमेव व्यभिचारवारकत्वमिति भावः। 'अन्यथेति यदि जातिर्न स्वतो व्यावृत्ता किन्तु व्यक्तिव्यावर्त्तनीया तदा व्यावृत्तपरस्परव्यावर्त्तनीयत्वेन परस्परस्यान्योन्याश्रयापत्तिरित्यर्थः। ननु यथाश्रुतं शरीराजन्यत्वेऽप्यस्ति तथाप्यभावमात्रस्य व्यभिचारितया अन्यत्वस्य व्यभिचारवारकतया नियमघटकत्वात्तथाच विशेषणं व्यभिचारवारकमेव व्याप्तिग्रहविषय इति नियमार्थकत्वस्तथाच क्व गोत्वादावुक्तनियमव्यभिचार इत्यपरितुष्यन्नाह, 'अपि चेति। ननु सहचारदर्शनादिसत्त्वेऽपि व्यभिचारवारकं विशेषणं प्रतिबन्धकमिति मनसिकृत्य शङ्कते 'व्यभिचारेति, 'विशेषणशून्ये' विशेषणज्ञानशून्य इत्यर्थः, अत एवोत्तरेऽपि ज्ञायमानत्वपर्यन्तमुपात्तं, अन्यथा प्रमेयत्ववतीत्येव ब्रूयात् इति। 'न च

---

(१) प्रमेयत्वेन ज्ञायमाने धूम इति ख०।

चेत्। न। विरोधात्। न हि तत्रोपात्तं तेन शून्यश्चेति घटते यद्विषयत्वेन परामर्शकारणमनुमितौ तल्लिङ्गं। प्रकृते च व्यभिचारादन्यथासिद्धेश्च न विशेषणविषयकत्वेन तत्त्वमिति चेत्। न। धूमाव्याप्यत्वापत्तेः व्यभिचारात् तद्विषयत्वेनानुमित्यकारणत्वात्। अथैकमवच्छेदकं अपरञ्च व्याप्तिः, यद्वा लाघवेन व्यासज्यवृत्तिरेकैव व्याप्तिरिति विशिष्टव्याप्यर्थः तत्र विशेष्यतावच्छेदकस्य व्याप्यनवच्छेदकत्वेन विशेषणस्य तदवच्छेदकत्वनियमादेकवृत्तित्वबाधे सत्येव व्यासज्यवृत्तित्वमिति व्याप्तेश्च न शरीरजन्यत्वाभावे नीलधूमादौ च व्याप्तिरिति विशेष्यमात्रे सा, तथाच स्वरूपासिद्धिस्तद्वारणार्थं विशेषणाभिधाने व्याप्यत्वासिद्धिरिति चेत्। न। अव्यभिचारस्यानौपाधिकत्वस्य वा विशिष्टे नीलधूमादौ सत्त्वेन तद्व्यतिरेकसाधने बाधात्। न च विशेष्यत्वमुपाधिः,[1]

---

विशेष्यत्वमिति, यत्र व्याप्तिस्तत्र विशेष्यत्वमतो नीलधूमे न व्याप्तिरिति न अनौपाधिकत्वस्यैव व्याप्तितया विशेष्यत्वस्य च तद्व्यापकतयानुपाधित्वादिति भावः।

ननु विशिष्टे सामानाधिकरण्यमेव न किन्तु विशेष्यमात्रे तदिति न विशिष्टे व्याप्तिरित्यस्वरसाद्विशिष्टव्याप्तिमन्यथानुपपत्त्या

---

(१) विशेष्यमुपाधिरिति क०।

साधनव्यापकत्वात्। किञ्च सौरभविशेषवद्धूमरहितमिदं चन्दनप्रभववह्निरहितत्वात्, निर्धूमोऽयमार्द्रेन्धनप्रभववह्निरहितत्वात्, इत्यादावपि कारणविशेषाभावेन कार्य्यविशेषाभावानुमानं न स्यात् वह्निरहितत्वादिकस्योपाधिर्भवेत्, व्यतिरेकिण्यष्टद्रव्यातिरिक्तद्रव्यानाश्रितत्वस्य हेत्वभावव्याप्यं न स्यात् द्रव्यानाश्रितत्वस्यैव व्याप्यत्वात्, रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादित्यादौ त्वयाप्यसिद्धिवारकविशेषणस्वीकाराच्च[1]।

---

साधयति, 'किञ्चेति, 'वह्नीति व्याप्तिविरहे वह्निरहितत्वं वह्निसमानाधिकरणत्वमुपाधिरिति तत्समानाधिकरणे विशिष्टधूमादावपि नासीत्यर्थः। यद्वा साध्यव्यापकत्वज्ञानदशायां साधनाव्यभिचारज्ञानेऽपि वह्निरहितत्वादिकमुक्तानुमानयोरुपाधिः स्यादुक्तविशेषणतया साधनस्योपाध्यव्याप्यतया उपाधेः साधनाव्यापकत्वज्ञानादित्यर्थः। ननु रूपादिषु मध्य इति व्यभिचारवारकतापर्यवसन्नमेव गन्धमात्रव्यञ्जकत्वं हि द्रव्यत्वविशेषितं हेतुकार्य्यं सन्निकर्षं व्यभिचारप्रसङ्गात् तस्य तेन व्यभिचारवारणं तदा यदि व्यभिचारः स च तदा यदि हेतोः प्रसिद्धिरिति रूपादिषु मध्य इति विशेषणं

---

(१) यथोक्तन्तु घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धव्यञ्जकघृतवत् इति, अत्र दृष्टान्ते स्वीयरूपव्यञ्जकत्वादसिद्धिवारणाय रूपादिषु मध्ये इत्यनेन परकीयरूपाद्यव्यञ्जकत्वस्य विवक्षितत्वमावश्यकं तथाच अत्र परकीयेति विशेषणं असिद्धिवारकमिति समुदितार्थः।

अपि च गौरवेण विशिष्टस्य व्यापकतापि न स्यात्, तथाच स्थापनानुमाने उपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्यता, धूमेनार्द्रेन्धनप्रभववह्निः घटत्वेन शरीरजन्यत्वादिकं नानुमीयेत।

यत्तु स्वजन्यान्योऽन्याभावापेक्षया शरीरजन्यान्योन्याभावस्याल्पत्वात् तेषामेव व्याप्यत्वमिति विपरीतमेव लाघवमिति, तन्न, विरोधाभावेन बहूनामल्पस्य च व्याप्यत्वात्। स्नेहे शीतस्पर्शवत्त्वजलत्वयोर्गन्धाभावे-पृथिवीत्व-पृथिवीत्वाभावयोरिव[१]। अन्यथा नीलधूमस्यैव व्याप्यत्वे धूममात्रस्याव्याप्यत्वप्रसङ्गः।

किञ्च त्वन्मये बह्वन्योन्याभावापेक्षया जन्यत्वात्यन्ताभावस्यैव व्याप्यता स्यादेकत्वात् प्रमेयत्वाद्यनन्तधर्मविशिष्टस्य व्याप्तावपि प्रयोजनाभावान्नानुमाने तदुपन्यासः। अथ लाघवेन जन्यत्वस्य शीघ्रोप-

प्रसिद्धिं सम्पाद्य द्रव्यत्वेन परम्परया व्यभिचारवारणप्रयोजकमेवेत्य-रुचेराह, 'अपि चेति, मन्मत्यन्ताभावरूपे शरीराजन्यत्वे व्यर्थविशे-षणताशङ्कैव नेत्यनुपदमेव स्फुटमन्योन्याभावपक्षेऽपि सामान्या-न्योन्याभावेन वैयर्थ्यमिति शरीरजन्यत्वाश्रयान्योन्याभावे हेतौ वैयर्थ्यं वक्तव्यं तच्च कस्यापि परिहारं निरस्यति, 'यत्त्विति,

(१) पृथिवीभिन्नत्व-पृथिवीत्वात्यन्ताभावयोरिवेत्यर्थः।

स्थितिकतयां जन्याभावत्वेन शीघ्रं व्याप्तिग्रहो न तु शरीरजन्याभावत्वेन विलम्बितप्रतीतिकत्वात्। यत्र विशेषण-विशेष्यान्यतराभाववति साध्यं तत्र विशिष्टाभावस्यापि व्याप्तिरिति चेत्। न। एवं ध्वंसोत्पत्तिमत्त्वे सति सत्त्वादिकमनित्यत्व-सकर्तृकत्वव्याप्यतया न गृह्येत, शीघ्रोपस्थितिकतया घटत्वादेरेव तथाभावात्[1]। यदि च सामान्य-विशेषभावादिरोधाभावेनोभयस्यापि व्याप्यता, तदा शरीराजन्यत्व-जन्यत्वाभावयोरपि तुल्यं। किञ्च शरीरजन्यत्वं विशिष्टं तदभावं विशिनष्टि न तु साक्षात् तथाच शरीरजन्यत्वाभावोऽखण्ड-एव हेतुरतो न व्यर्थविशेषणता। न चाथ विशिष्टाभावो विशेष्याभाव एव, क्षित्यादावजन्यतापत्तेः। अत एव स्थापनायां शरीरजन्यत्वमुपाधिः साध्याभावव्याप्याभावप्रतियोगित्वेन साध्यव्यापकत्वनियमात्। व्यर्थविशेषणेऽधिकं निग्रहस्थानमिति चेत्। न। हेतुद्वयोपन्यासे च तत् इह तु विशिष्टमेकमेव हेतुरिति विरुद्धस्थले उक्तमिति। उच्यते। नीलधूमादौ

'अखण्ड एव' एक एवेत्यर्थः।

(1) तथात्वादिति ख०।

व्याप्तिरस्त्येव अन्यथा विशेषणाणामव्याप्यत्वे निराश्रया व्याप्तिः स्यात्। नीलत्वमपि न व्याप्यतावच्छेदकं गौरवात् किन्तु धूमत्वमेव दण्डत्वेन कारणत्वे रूपमिव, धूमत्वञ्च न नीलिम्नि किन्तु तदाश्रये धूमे इति न नीलधूमस्य हेतुत्वम्। नीलधूमे नीलस्य विशेषणत्वे

---

'नीलत्वमपीति अवच्छेदकत्वमवच्छिन्नप्रत्ययजनकत्वं वा स्वरूपसम्बन्धविशेषो वा द्वयमपि गुरुणि नीलधूमत्वादौ न सम्भवतीत्यर्थः। ननु धूमत्वावच्छेदेन नीलविशिष्टोऽपि धूमोऽनुमितिहेतुरिति तद्धेतुतया नीलधूमादिति हेत्ववयवः कर्त्तव्य एवेत्यत आह, 'धूमत्वञ्चेति, इदञ्च वस्तुगतिमनुरुध्योक्तं, वस्तुतो यदि धूमत्वं नीले भवेत्तथापि धूमवद्व्यक्तिस्थानीयं तदिति धूमएव हेतुर्न न नीलधूमो नीलधूमत्वस्य व्याप्यतानवच्छेदकत्वात् नीलधूमत्वस्यापि धूमत्वावच्छेदेन हेतुत्वादिति नीले धूमत्वाभावोपवर्णनमप्रकृतमेव, प्रकृतन्तु गौरवमेव, एवमग्रेऽपि नीलस्य विशेषणत्व इत्यप्यप्रकृतं तच धूमत्वसत्त्वेन व्याप्यत्वेऽपि नीलधूमत्वस्यानवच्छेदकत्वसम्भवात् अन्यथा धूमादित्यपि न हेतुः धूमत्वेऽपि धूमत्वाधत्वादिति प्रकृतं गौरवमेव तदहेतुतायां वीजं द्रष्टव्यं। इदन्तु व्याप्यतावच्छेदकधूमत्वशून्यत्वात्, वस्तुतो नीलांशो व्याप्योऽपि न भवतीति धूमत्वानाश्रयत्वमव्याप्यत्वे तन्त्र, अतोऽपि धूमत्वमवच्छेदकमित्युक्तपोषकतयोपन्यस्तं। ननु व्याप्यतावच्छेदकमस्तु धूमत्वमात्रं प्रकृते तदवच्छिन्नोऽपि नीलधूमरूपो विशेषो-

तद्विशिष्टेन धूमत्वम् । उपलक्षणत्वे च धूमादेवानुमितिः । किञ्च व्याप्यतावच्छेदकस्यैव हेतुतावच्छेदकत्वमिति न नीलधूमत्वं तथा । न चैवं धूमत्वस्यावच्छेदकत्वेऽपि सामग्रीसत्त्वान्नीलधूमादनुमित्युत्पत्तौ हेत्वाभासत्वं न

---

ऽस्तीति तथा निर्देशोऽपि हेतोः कर्त्तव्य इत्यत आह, 'किञ्चेति, व्याप्यतानवच्छेदकेन हेतुनिर्देशेऽतिप्रसङ्गादिति भावः ।

अत्र केचित् नीलधूमत्वं धूममात्रनिष्ठव्याप्तौ न्यूनत्वादेव नावच्छेदकमिति नीलधूममात्रनिष्ठव्याप्तौ तदवच्छेदकं वाच्यम् तत्र धूमत्वस्यातिप्रसक्ततया नीलधूमत्वमेवावच्छेदकमिति, व्यर्थविशेषणत्वन्तु स्वार्थानुमाने न दोषः परार्थानुमाने तर्थाचित्तापसिद्धान्तापादकतया दोषः, तथापि विशेषविधेः शेषनिषेधपर्यवसायितया नीलधूमहेतुत्वविधिः धूममात्रस्याहेतुत्वाभिप्रायं प्रतिपादयति, न हि विशेष्यमात्रस्य हेतुत्वे सम्भवत्युन्मत्तो विशिष्टं हेतुत्वेन निर्दिशतीति, तदहेतुत्वाभ्युपगमे तदीये प्राप्ते तस्यापसिद्धान्त आपद्यत इति चेत् । न । न्यूनवृत्तेरप्यवच्छेदकतया वह्निसामानाधिकरण्यावच्छेदकत्वं नीलधूमत्वस्य सम्भवदपि गौरवेणापास्यते अन्यथा धूमत्वमपि न वह्निव्याप्यतावच्छेदकं आलोकावृत्तित्वेन न्यूनवृत्तिमात् । न च नीलधूमत्वावच्छिन्ना व्याप्तिरन्या, अवच्छेदकव्यभिचारेण तद्धीव्यभिचारेण वा अवच्छेदकान्तरकल्पनात् । न चेह तथात्वम् इति, तदवच्छिन्नव्याप्त्यन्तराकल्पनात् । यत्तु अपसिद्धान्तपर्यवसानमिति, तत्र,

उभयोर्हेतुत्वे सम्भवत्यन्यतरोपादानस्यान्यतरहेतुताभिप्रायोत्रायकत्वाद्यथा विशिष्टाभावस्थलमधिकेन(१)। यत्तु यद्वस्तुगत्या अवच्छेदकं तेन व्याप्तिधीरिति वस्तुतोऽनवच्छेदकेन व्याप्यग्रह इत्यज्ञानरूपेयमसिद्धिः पर्यवसिता, न तु ज्ञानगर्भलक्षणाभावेऽपि व्याप्यत्वासिद्धिः, तथाच व्याप्यत्वासिद्धिर्व्यर्थविशेषणादाविति प्रागुक्तग्रन्थविरोधः। किञ्च परामर्शविषयाभावतया असिद्धिचयमनुगमयता व्याप्यभावो व्याप्यसिद्धिरित्युक्तं, इयन्तु व्याप्तिज्ञानाभावरूपा पर्यवसिता। अतएव यतो गौरवात् तदनवच्छेदकं तदेव व्याप्यत्वासिद्धिपदेन विवक्षितं तस्य ज्ञायमानतयैवानुमितिप्रतिबन्धकत्वादित्यपास्तं। तस्य परामर्शविषयत्वाभावात् अप्रतिबन्धकत्वाच्च विरोधाभावाद्विषयविरोधकारणविरोधासम्भवेन ज्ञानस्याप्रतिबन्धकत्वात्। अतएव सत्यपि गौरवज्ञाने व्याप्तिग्रहसामग्र्यां सत्यां व्याप्तिग्रहः चन्दनदहनाभावेन सुरभिधूमविशेषाभावानुमानादौ। अतएव चेश्वरदयानुमितिप्रतिबन्धकगौरवं न पृथगाभासः। किञ्चासाधारणं प्रतिबन्धकं आभासो गौरवञ्च साधारणं मानमात्रप्रवृत्तेरीश्वरज्ञानसापेक्षत्वात् तस्माद्यत्सम्बन्धितावच्छेदकरूपवत्त्वलक्षणा व्याप्तिरनुमितिहेतुः। अतएवोदाहरणेन सकलसाधनवति साध्यसत्त्वं दर्शयता या प्रदर्श्यत इति, तदभावो व्याप्यत्वासिद्धिः तदभावश्चावच्छेदकत्वाभावो नीलधूमादौ द्रष्टव्यः, नीलधूमेऽवच्छेदकान्तरसत्त्वेऽपि नीलधूमत्वेनावच्छेदकत्वाभावात् व्याप्तित्वेन व्याप्तिज्ञानस्यानुमितिहेतुतया अव-

---

(१) यथा विशिष्टाभावः असमर्थविशेषेण इति पाठो भवितुमर्हतीति।

च्छेदकत्वज्ञानस्यापि परामर्शहेतुत्वेनावच्छेदकत्वाभावेऽपि परामर्श-
विषयाभावत्वलक्षणासिद्ध्यनुगमकत्वसम्भवादिति केषाञ्चिन्मतं, तदप्य-
सत्, सम्बन्धितावच्छेदकलक्षणायां व्याप्तौ अवच्छेदकत्वं अवच्छेद्या-
नधिकरणत्वं वाच्यं तच्च नीलधूमत्वेऽस्त्येव। अथ तादृशधर्मान्तरा-
विशेषितत्वमप्यनधिकरणवृत्तित्वे विशेषणं तदा सर्वव्याप्तिलक्षणतो-
गौरवेणाहेतुरेव इति तदभावज्ञानस्य न प्रतिबन्धकता, उदा-
हरणन्तु व्याप्तिघटकपदसार्थक्यं प्रदर्शयति न तु कथञ्चिद्व्याप्ति-
मपीत्युक्तं, तादृशधर्माघटितत्वादेरुदाहरणादुपस्थितिग्रहेव नाप्नोति
न किञ्चिदेतत्। तस्मादिदमत्र तत्त्वं नीलधूमत्वादेरनवच्छेदकतया
व्याप्तेश्च धूमत्वाद्यवच्छिन्नायास्तत्र सत्त्वेन विशेष्यवति विशिष्टाभावस्य
विशेषणविरहनियतत्वं न त्वमेव एवेति तदनवच्छेदकत्वनियतः
तदवच्छिन्नव्याप्त्यभावो व्याप्यत्वासिद्धिः, स तु विशेषणावच्छिन्न-
विशेष्यविरहो वा सम्बन्धविरहो वा इत्यन्यदेतत्। एवञ्च ज्ञान-
गर्भहेत्वाभासलक्षणं परामर्शविषयाभावरूपस्य विभाजकमिति द्वय-
मप्युपपद्यते। न च नीलधूमत्वावच्छिन्नव्याप्त्यप्रसिद्धेः कथमेतदिति
वाच्यम्। कस्तूरिकादहनादिप्रतियोगिकविशेषव्याप्तेस्तादृश्याः प्रसिद्धेः।
न च तादृशी व्याप्तिर्नीलधूमेऽस्त्येवेति वह्नित्वावच्छिन्नप्रतियोगिक-
नीलधूमत्वावच्छिन्नव्याप्त्यभावस्य वाच्यत्वे पुनः सैवाप्रसिद्धिरिति
वाच्यम्। व्यभिचारादिसङ्कीर्णव्याप्यत्वासिद्धेऽप्येवमप्रसिद्धा व्यापकत्वा-
भावरूपायास्तस्या वाच्यत्वेन प्रकृतेऽपि नीलधूमत्वावच्छिन्नव्याप्ति-
प्रतियोगित्वलक्षणव्यापकत्वाभावस्य वह्नित्वावच्छिन्ने व्याप्यत्वासिद्धि-
पदार्थत्वात् तज्ज्ञानस्यापि प्रतिबन्धकत्वात् समानवित्तिवेद्यतया

स्यात् अनुमितिप्रतिबन्धकस्य तत्त्वादिति वाच्यं। तदभावेऽपि नीलधूमप्रयुक्तसाध्यवत्प्रत्ययस्य भ्रमत्वेन तत्कारणत्वस्याभासत्वसम्भवादिति दिक्।

---

व्याप्यत्ववद्व्यापकत्वस्यापि परामर्शविषयत्वेन उक्तव्यापकत्वाभावे विभाजकस्यापि सत्त्वाच्च। वस्तुतो धूमत्वावच्छिन्ने नीलधूमत्वावच्छिन्नव्याप्त्यभाव एव व्याप्यत्वासिद्धिः तस्या नीलधूमत्वावच्छिन्ने सत्त्वेनान्यधर्मावच्छिन्ने विरहात्। न च नीलधूमत्वस्य वह्निसामान्यव्याप्त्यवच्छेदकत्वेऽपि धूमत्वावच्छिन्ने तदभाव इति किं गौरवमित्यस्यानवच्छेदकत्वोपवर्णनेन तदवच्छिन्ने तदभावेऽपि हेतुदोषाभावाच्चेति वाच्यम्। सामान्यव्याप्तौ नीलधूमत्वावच्छेदकत्वसम्भवेन न्यूनवृत्तिनापि तेनावच्छिन्नायाः सामान्यव्याप्तेर्धूमत्वावच्छिन्ने सत्त्वेन तदभावाभावात्। न चैवं शाखावच्छिन्ने वृक्षे वर्त्तमानस्य संयोगस्य वृक्षत्वावच्छेदेनाभावनियमेन वृक्षः संयोगीति ज्ञानं प्रमा न स्यादिति वाच्यम्। वृक्षः संयोगीति वृक्षत्वसामानाधिकरण्यमपहाय तदवच्छेदकत्वपर्य्यन्तयाविषयिणो ज्ञानस्य तथाभावादेवेति दिक्। 'सम्भवादिति, 'दिगिति, दिगर्थस्तु उद्देश्यानुमितिप्रतिबन्धकतयोक्तक्रमेण भ्रमानुमितिजनकस्याभासत्वं तदा यदि लिङ्गोपधाननियतत्वमनुमितौ तत्तु नास्तीत्युक्तं, लिङ्गानुपधानपक्षे त्वनुमितिप्रतिबन्धकत्वं शरीराजन्यत्वादेरेवेति[१] निश्चेयम्। यत्र विशेष्यस्य स्वरूपासिद्धत्वं नीलधूमे त नीलधूमत्वज्ञानमावश्यकमवच्छेदकत्वन्तु तस्य न तु

---

(१) शरीराजन्यत्वादेवेतीति पा०।

एवं शरीराजन्यत्वेऽपि न शरीरमवच्छेदकं गौरवात् येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेदकत्वनियमात्। अतएव गन्धस्यैव व्यञ्जकत्वादित्यत्राप्रसिद्धत्वेन रूपादिषु मध्य इति विशेषणं विना व्याप्तिर्ग्रहीतुं न शक्यत इत्यसिद्धिवारकमपि विशेषणं सार्थकमेव, सुरभिधूमविशेषादौ च चन्दनप्रभवाग्न्यादेः कारणत्वात् कारणाभावस्य कार्याभावप्रयोजकतया व्याप्य-

---

केवलधूमत्वस्य विपरीतगौरवादिति नीलधूमे गृह्यमाणे हेतुज्ञानस्यैवोत्पत्तेरनुमितिरवर्जनीया, शरीराजन्यत्वादौ तु तत्रानुमितिप्रतिबन्धकत्वमेवावधारणीयमित्यादिः। 'शरीराजन्यत्वेऽपीति शरीरजन्यत्वाश्रयान्योन्याभावेऽपीत्यर्थः, 'रूपादिष्विति, न च रूपाद्यव्यञ्जकत्वे गन्धव्यञ्जकत्वं तदर्थः, तादृशहेत्वन्तरस्य गमकत्वेनैतद्गमकत्वानपवादादिति भावः। इदमुपलक्षणं चन्दनदहनजन्यं सुरभिधूमवत्त्वादित्यादौ व्यभिचारवारकमपि साध्ये चन्दनादिविशेषणं सार्थकं तेन विना हेतोर्विशेषणवैयर्थ्यमेव व्याप्यत्वात्। एवं हेतौ व्यर्थविशेषणं दृष्ट्वा साध्येऽपि विशेषणं प्रक्षिप्य तदुद्धरणीयमित्यपि तदुपष्टम्भकं द्रष्टव्यम्। 'कारणाभावस्येति कारणतावच्छेदकावच्छिन्नाभावत्वेनैव कार्याभावव्याप्यत्वनिश्चय एव सामान्यतः आर्द्रेन्धनजन्यवह्नित्वाभावस्यैव व्याप्यत्वमवगाहत इत्यर्थः। न चैवमन्योन्याश्रयः कारणतावच्छेदकावच्छिन्नार्द्रेन्धनान्वय-व्यतिरेकाभ्यां कारणताग्रहः

त्वनिश्चयः व्यापके च न व्यर्थविशेषणता विशिष्टस्य कारणत्वेन व्यापकत्वात् परिशेषव्यतिरेकिणि विपक्ष-बाधकेनानन्यगतिकतया विशिष्टस्य व्यापकत्वात्। विशिष्टाभावस्य हेत्वभावव्याप्यत्वं, यत्र च विपक्षबाधकं नास्ति तत्र विशिष्टस्य व्यापकतापि न यथा कार्यस्य हिकर्तृकत्वेनापि शरीरजन्यत्वाभावोऽखण्डो हेतुः, यदि हि शरीरजन्यत्वं सकर्तृकत्वप्रयोजकं स्यात्तदा तदभावप्रयुक्तः सकर्तृकत्वाभाव इति तस्य साध्य-व्याप्यता स्यात्, न चैवं, किन्तु जन्यत्वं लाघवात्तथा तथाचाजन्यत्वमेवोपाधिः, साध्यव्याप्याभावः साध्या-

---

तथाच व्यतिरेकव्याप्तिग्रहकारणताधीस्तथाच विशिष्टाभावव्याप्यत्व-ज्ञानमिति वाच्यं। कालिकान्वय-व्यतिरेकयोः कारणताग्राहकत्वात् कारणतायाश्च दैशिकव्याप्तौ विशिष्टाभावत्वव्याप्यतावच्छेदकत्वघटक-त्वात्। न च कालिकव्यतिरेकघटेऽपि कथमुक्तव्यर्थविशेषणतयेति वाच्यं। तत्रापीतरसमवधानकालीनकार्योपधाननियामकतावच्छेद-कावच्छिन्नविरहत्वेन कार्य्याभावप्रयोजकत्वघटेण सामान्यतो व्याप्य-तावच्छेदकत्वघटात्। न ह्यन्वयाप्रयोजकस्याभावो व्यतिरेकप्रयोजकः सम्भवति। अतएव तादृशान्वयप्रयोजकत्वमात्रस्य प्रयोजकतया नियतान्वयमात्रमेव कारणताग्राहकमित्यप्याहुः। न चैवं कारण-तावच्छेदकावच्छिन्नाभावोऽस्तु व्याप्यः आर्द्रेन्धनाभावस्तु कथं तत्रार्द्रे-न्धनस्य वह्निसहकारित्वादिति वाच्यं। वह्निसंयोगमात्रेणार्द्रेन्धनस्य

भावव्यापकइति नियमेन तस्य साध्यव्यापकतानिश्चयात्सकर्तृकत्वशरीरजन्यत्वयोर्व्याप्यभावेन तदभावयोरपि व्याप्यभावइति व्याप्यत्वासिद्धत्वाच्च। अतएव शरीरजन्यत्वाभावस्याकर्तृकत्वव्याप्यत्वात्तदभावयोरपि व्याप्य-व्यापकभावइति निरस्तम्। शरीरजन्यत्वस्य सकर्तृकत्वाप्रयोजकत्वात्। न चाजन्यत्वं पूर्वसाधनं व्यतिरेकत्वेन नोपाधिः सत्प्रतिपक्षोच्छेदप्रसङ्गादिति वाच्यम्। स्थापनायायथाभासत्वं तव विशेषादर्शनदशायां सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात् यथा शब्दोऽनित्यो गुणत्वादित्यत्र शब्दोनित्यो व्योमैकगुणत्वादित्यनेन सत्प्रतिपक्षे गुणत्वाभावो नोपाधिः जलपरमाणुरूपे साध्याव्यापकत्वात्। न चैवमनैकान्तिकत्वमेव तयोरुद्भाव्यं, सत्प्रतिपक्षमुपेक्ष्य तस्योद्भावनानर्हत्वात्। किञ्च प्रागभावप्रतियोगित्वे सति समवेतत्वस्य तत्प्रतियोगित्वे सति सत्त्वस्य सत्त्वे सत्युत्पत्तिमत्त्वस्य वा हेतुत्वे एषामन्यतमव्यतिरेक उपाधिरिति न पूर्व-

धूमानुत्पत्त्या तज्जन्यवह्नित्वेनैव हेतुतावच्छेदात् एवमन्यत्रापीति दिक्। 'सत्प्रतिपक्षेति समीचीनप्रतिपक्षोच्छेदो द्वितीयानुमानाभासत्वनियम इति यावत्, यतश्चैवमर्थकल्पनं तदर्थमपन्यप्रयोजनञ्च

साधनव्यतिरेकः। अतएवाजन्यस्य नोपाधित्वं ध्वंसे साध्याव्यापकत्वादिति न दोषः।

अन्ये तु यन्निष्ठा यन्निरूपिता च व्याप्तिर्येन विशेषणेन विना न गृह्यते तत्र विशिष्टं व्याप्यतावच्छेदकं अकर्तृकत्वनिरूपिताभावनिष्ठव्याप्तौ च शरीरं विनैव प्रतियोगितया जन्यत्वमवच्छेदकं ज्ञातमिति न शरीरजन्यत्वमवच्छेदकं धूमे नीलधूमत्वमिवातिगौरवेण शरीरजन्यत्वमप्रतियोगितया च जन्यत्वं नावच्छेदकमिति व्याप्यतावच्छेदकाभावान्न शरीरजन्यत्वाभावोऽकर्तृकत्वव्याप्यः। व्यभिचाराभावात्तथेति चेत्। न। क्षित्यादावेव व्यभिचारात् अन्यथा क्षित्यादिना दृष्टहेतुकं शरीरजन्यत्वाभावादित्याद्यपि स्यात्। नन्वस्तु तावदशरीर-नित्यज्ञानादिकर्त्रनुमितिस्तथापि सानुमितिरयथार्था अशरीरे कर्तृत्वज्ञानत्वात् ज्ञानेच्छाप्रयत्नेषु नित्यज्ञानत्वात् शरीराजन्ये सकर्तृकत्वज्ञानत्वात् घटः कर्त्ता घटज्ञानादिकं नित्यं व्योम सकर्तृकमिति ज्ञानवदिति साध्यम्। न चोपजीव्यवाधः, अनुमितिर्हि

---

प्रागेव कृतमिति तथानुसन्धेयं। 'अतएवेति' समवेतत्वादिविशेषितो यतो हेतुरतस्तदभावस्यैवोपाधित्वादित्यर्थः। 'अन्ये' नित्यत्वरमोक्षा-

उपजीव्या। नन्वस्तु तद्‌यथार्थत्वमपीति चेत्, न, कर्तृकार्ययोर्निरुपाधिकार्य-कारणभावेन एतस्याप्रयोजकत्वात्। अन्यथा पर्वते वह्न्यनुमितिरयथार्था उभयसिद्धवह्निमद्भिन्ने वह्निज्ञानत्वादित्यादिना सकलान्वयव्यतिरेकोच्छेदः। किञ्चानुमितेरयाथार्थ्यमनेन ज्ञाप्यं न तु कार्यम् तथाच दोषादुत्पन्नस्यानेन ज्ञापने तथायमेव दोषो दोषान्तरं वा, नाद्यः अन्योन्याश्रयात् उत्पन्ने तस्मिन् ज्ञापनज्ञापकादेव च तस्माद्दोषात्तदुत्पत्तिरिति। नान्त्यः असिद्धेः। तर्काप्रतिहतिस्तु न दूषणम्। यदि ईश्वरः कर्त्ता स्यात् शरीरी स्यात् इष्टसाधनताज्ञानवान् स्यात् प्रयोजनवान् स्यात् अनित्यज्ञानवान् स्यात् क्षित्यादि यदि सकर्तृकं स्यात् शरीरिकर्तृकं स्यात् इत्यादितर्काणां विपर्यये आश्रयासिद्धिव्यर्थविशेषणत्वादिना विपर्ययापर्यवसानेनाभासत्वात्। ननु क्षित्यादावेककर्तृसिद्धिः कुतः एककर्तृकत्वेन व्याप्त्यभावात्। न च लाघवात्तस्याप्रमाणत्वात् सकर्तृकत्वप्रमाणादेव लाघवसहकृतात् तत्सिद्धिरिति चेत्, न, तावदनुमितिमात्रे लाघवं सहकारि व्यभिचारात्

---

वनं, नदीभिन्नु यद्भिन्नत्वञ्च यत्पदस्य व्यक्तिपरत्वे प्रकृतासङ्गतेरभावव्यक्तिविशेषनिष्ठव्याप्त्यंशेन विना अयुक्तात् प्रतियोगित्वं विना

मानाभावाच्च । न हि लिङ्गपरामर्शे सति तद्विलम्बेनानुमितिविलम्बो येन सहकारिता स्यात्[१] । नापि लघ्वनुमितौ अन्योऽन्याश्रयात् । नापि व्यन्नयनुमितौ धूमेन वह्न्यनुमितौ एक-द्वित्वसंशयाभावापत्तेः । साधकाभावेन नानात्वासिद्धौ कर्तृसिद्धिरेवैककर्तृसिद्धिरिति चेत् । न । एकत्वसाधकाभावेनैकत्वासिद्धौ कर्तृसिद्धिरेव नानात्वसिद्धिरित्यस्यापि सुवचनात् । अथ यमर्थमनालम्बमानानुमितिः पक्षे साध्यसंसर्गं न विषयीकरोति स पक्षधर्मताबलात्सिध्यति न त्वधिकमपि तथाच द्वितीयं कर्त्तारमविषयीकुर्वत्यपि कर्त्तारं विषयीकरोत्येवेति न द्वितीयमवगाहते एकस्तु कर्त्ता सिध्यति तदविषयत्वे कर्तृविषयतैव न स्यात् एकविषयत्वाभावे नानाविषयत्वस्याप्यभावात्तद्घटितत्वात्तस्येति चेदेवं तर्हि कर्त्रेकत्वमपि न विषयः स्यादेकत्वविषयत्वं विनापि कर्तृविषयत्वसम्भवात् । वस्तु-

---

अभावग्रहेणाश्रयाग्रहादिति विशेष्यतावच्छेदकावच्छिन्नपरत्वं तस्य वाच्यं, तथाच अन्यत्वमपि व्यर्थं अभावनिष्ठव्याप्तेस्तेन विनापि हेत्वभावादित्यादौ ग्रहादिति ।

---

(१) तत्सहकारि स्यादिति ख० ।

गत्यैकः सिध्यति न त्वेकत्वेनेति चेत्, न, एकत्वासिद्धार्थस्तु गत्यैकइति ज्ञातुमशक्यत्वात्, तथाचेश्वरे एकत्वानेकत्वयोर्नित्यसंशय इति उच्यते यत्र प्रमाणे लघु-गुरु-विषयता सम्भवति तत्र लाघवसहकारिता, कारणता-कार्यता-व्याप्यतादिग्राहके प्रत्यक्षे प्रवृत्तिनिमित्तग्राहके उपमाने शब्दशक्तिग्राहकानुमाने तथाविधप्रमाणमात्रे सकलतान्त्रिकैः सहकारित्वकल्पनात्, एवं लाघवमेवं गौरवमिति ज्ञानानन्तरं बाधकं विना लघूनामेव कारणत्व-कार्यत्व-प्रवृत्तिनिमित्तत्व-शब्दशक्यत्वानां ज्ञानदर्शनात् तथापि लाघवानादरे शब्दशक्यत्वादिसंशये तन्मूलकव्यवहारोच्छेदोऽविनिगमकाभावात् सोऽयं वि-

---

१ 'लाघवसहकारितेति, ननु लाघवज्ञानमनुमितौ सहकारीभूय स्वविषयीकृतमर्थमर्पयति न वा, अर्पयति चेत् व्याप्ति-पक्षधर्मतोपनीतादन्यस्येत्यादिग्रामुकग्रन्थविरोधः। नेतिपक्षे सहकारित्वानुपपत्तिः अपि प्रामाण्यसंन्देहात् तत्सन्देह इत्यादिविरोधः, एकत्वप्रकारकानुमितावजातायां विरोधिज्ञानाभावेनैकत्वसन्देहार्थं प्रामाण्यसंशयपर्यन्तानुसरणानौचित्यात् स्वरूपादिसन्देहसामग्र्या एवाक्षपत्वादिति, अलघुनि लघुत्वभ्रमाच्चानुमितिभ्रमः इत्यप्येवं विरुध्येतेति। अत्र ब्रूमः लाघवोपनीतार्थोऽप्यनुमितौ भासतएव 'व्याप्त्यादौतादिपन्यस्यानुमितित्वावच्छेदेन तावन्मात्रोपनीतभानमित्यत्र तात्पर्यात् लाघवस्य

चारमारभते लाघवञ्च न तदङ्गमङ्गीकरोतीति[1] महत्साहसम्। नन्वेवं वस्तुगत्या नानाकर्तृकेषु घटेषु घटत्वेन कुलालकर्तृकत्वानुमानेऽपि बाधकानवतार-दशायां लाघवादेककर्तृसिद्धिः स्यात्। न चेष्टापत्तिः, अनुमित्यनन्तरं नानैककर्तृकत्वे संशयादिति[2] चेत्। न। तत्रापि लाघवेन कर्त्रैक्यमेव सिद्ध्यति। तत्सन्देहस्तु ज्ञानप्रामाण्यसंशयादिति पश्चान्नानाकर्तृकत्व-साधकप्रमाणादेककर्तृकतानुमानं[3] तत्र बाध्यते। न चैवं क्षित्यादिकर्त्तर्य्यपि, प्रामाण्यसंशयादेकत्वसंशया-देकत्वसंशयो दुरुच्छेदः एकत्वे बाधकस्याभावेन प्रामाण्यनिश्चयात्। न चैकत्वसाधकाभावएव बाधकः, अनुमितेरेव लाघवसहकारेण एकत्वसाधकत्वात्।

अन्ये तु क्षितिकर्त्ता अङ्कुरकर्त्तभिन्नः अशरीर-कर्तृत्वात् अङ्कुरकर्तृवदित्यभेदानुमानादेककर्तृसिद्धिः। न च क्षितिकर्त्ता अङ्कुरकर्तृभिन्नः अङ्कुरेऽकर्तृत्वात्

---

प्रमाणमात्रस्य सहकारितया तदुपनीतस्य प्रमाणत्वावच्छेदेनैव विषयीकरणसामर्थ्यादिति सर्वमवदातं। 'अन्ये तित्यखरसोद्भावनं

---

(१) तदङ्गं नाङ्गीकुरुत इति ख०।

(२) नानात्वैकत्वे संशयादितीति ख०।

(३) एककर्तृकताज्ञानमिति ख०।

कुलालवदिति सत्प्रतिपक्षः, अनित्यज्ञानानामाश्रयत्वस्योपाधित्वादित्याहुः। अत्राप्यप्रयोजकत्वे भेदाभेदयोर्गौरव-लाघवे एव शरणम्। तथापि कथं नित्यसर्वविषयज्ञानसिद्धिः। पक्षधर्मताबलादिति चेत्, व्यापकतयावगतस्य पक्षसम्बन्धमात्रं पक्षधर्माद्धेतोः सिध्यति तथाच पक्षे तदुपादानगोचरज्ञानमात्रं सिध्येन्न तु नित्यसर्वविषयज्ञानं तेन रूपेण व्यापकत्वाग्रहात्। न च येन विनानुपपत्तिः सोऽपि विषयः, व्यतिरेकिविलयापत्तेः।

तत्र प्राञ्चः यमर्थमनालम्बमानानुमितिः पक्षे साध्यसम्बन्धं न विषयीकरोति स पक्षधर्मताबलात्सिध्यतीत्यनुपपत्तिमूलकोऽन्वयी प्रतीतानुपपत्त्या च व्यतिरेकी तदिहानादिद्व्यणुकादिकार्यप्रवाहस्य पक्षत्वे तदुपादानस्यानादिज्ञानगोचरत्वं विना नोपादानगोचरज्ञानजन्यत्वमनादिकार्यप्रवाहस्यानुमितिरालम्बते, अनादित्वैव च नित्यता सर्वमुक्तावपि तत्सत्त्व-

---

तद्बीजन्तु लाघवानवतारे एकानुमानस्याप्रयोजकत्वमेव, तदवतारे किमनुमानान्तरेणेत्यादिकमाकर एव स्फुटमिति।

'तत्र प्राञ्च इति, अत्र सर्वेषु कल्पेषु वाक्यान्तरनिर्देशात् स्वानुमतिरुन्नीयते तद्बीजमपि अनित्यप्रत्येकविषयज्ञानपक्षे

मनादिभावत्वात् पक्ष-तदुपादानविषयतैव च सर्व-विषयता लाघवात्तु तावद्विषयकमनाद्येकमेव ज्ञानं सिध्यति, न तु नित्यानित्यज्ञानानीति।

नव्यास्तु अनित्यज्ञानाजन्यत्वेन पक्षविशेषणात् ज्ञानं सिध्यन्नित्यमेव सिध्यति अनित्ये बाधादिति।

वाचस्पतिमिश्रास्तु लाघवादेकज्ञानसिद्धौ उत्पत्ति-मतोऽनादिकार्यप्रवाहं प्रत्यजनकत्वात् परिशेषेण नित्यज्ञानादिसिद्धिः। नियतविषयता च ज्ञानस्य कारणाधीना, कारणञ्च नित्यज्ञानान्निवर्त्तमानं नियत-विषयतामादाय निवर्त्तत इति सर्वविषयत्वसिद्धिरिति।

षट्पदार्थप्रतिपादकवेदकर्त्तृत्वेनेश्वरस्य षट्पदार्थ-गोचरसाक्षात्कारवत्त्वेन वा सार्वज्ञम्। घटाकाशसंयो-गादिकं प्रति ईश्वरस्य कर्त्तृत्वात् घटादिगोचरमपि ज्ञानं सिद्धमिति केचित्।

ननु घटादीनां कथमीश्वरकर्त्तृकत्वं भवति। घट-

---

गौरवं नित्यसर्वविषयकज्ञानपक्षे गौरव, नित्यसर्वविषयकज्ञानपक्षे लाघवमिति लाघवावतारे पूर्वोक्तन्यायेन नित्यसर्वविषयकज्ञान-सिद्धावलमेभिरायासबहुलैः कल्पैरित्यादि स्फुटमेवेति न प्रदर्शितं विशिष्येति स्मर्तव्यं।

ननु घटोपादानगोचरत्वे भगवज्ज्ञानादीनां सिद्धेऽपि न तद्धेतुता

ईश्वरकर्तृकः कार्यत्वात् क्षितिवदित्यनुमानादिति चेत्। न। घटस्य द्विकर्तृकतया तद्दृष्टान्तेन क्षित्यादेरपि द्विकर्तृका स्यात्[१] तथाच घटवत्क्षितिः क्षितिवद्घट इतीश्वरानन्त्यम्। कार्ये कर्तृत्वेन कारणता न तु द्विकर्तृत्वेनेति चेत्, तर्हि नेश्वरकर्तृकत्वेन कारणता किन्तु कर्तृत्वेनेति। मैवम्। ज्ञानादीनां नित्यत्वेन सर्वविषयतया घटाद्युपादानविषयत्वमपीति कथं न तेषां घटादिकारणता कुलालादिज्ञानतुल्यत्वात्, तदाहुराचार्याः। "परमाण्वदृष्टाद्यधिष्ठातृसिद्धौ ज्ञानादीनां नित्यत्वेन सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात् न तु तदधिष्ठानार्थमेवेश्वरसिद्धिः" इति। "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इत्याद्यागमाद्वायमर्थोऽध्यवसेयः। अथेश्वरस्य सर्वज्ञत्वे सर्वविषयभ्रान्तेर्ज्ञाने ईश्वरोऽपि भ्रान्तः स्यात् भ्रमस्येव तस्यापि भ्रमविषयविषयकत्वादिति चेत्। न। रजतत्वप्रकारकज्ञानवानयमिति ज्ञानं न भ्रमः अभ्रान्तस्य तथात्वात् इदं रजतमिति ज्ञाने रजतत्वं प्रकारस्तेन

---

अवश्यकल्प्यकुलालादिकर्त्रैवोपपत्त्याऽन्यथासिद्धत्वादित्यतो निःग्रहं प्रमाणमाह, 'अहमिति।

---

(१) क्षित्यादेरपि द्विकर्तृकतापत्तेरिति ख०।

स भ्रमः ईश्वरज्ञाने च रजतत्वप्रकारकत्वं प्रकार-इति स न भ्रमः। अतएवास्मदादिरपि भ्रान्तिज्ञो न भ्रान्त इति। स्यादेतत्। प्रयोजनं विना कथमीश्वरः प्रवर्त्तते सुखस्याभावात् अधर्म्माभावेन निर्दुःखत्वात्, करुणया प्रवर्त्तत इति चेत्, तर्हि परसुख-दुःखप्रहाणे प्रयोजने तथाच स्वर्गिणमेव सृजेन्न नारकिणम्। धर्म्माधर्म्मपरतन्त्रत्वात्तदनुरूपं फलं प्रापयतीति चेत्, तर्हि आवश्यकत्वात् कर्म्मनिमित्तमेव[1] जगद्वैचित्य-मस्तु किमीश्वरेणानपेक्षितकीटादिज्ञानवता कर्म्मनि-रपेक्षत्वे चैकदैव सदा च सर्ग-प्रलयौ स्याताम् ज्ञाना-दीनां नित्यत्वात्। किञ्च तत्प्रयत्नस्य करुणाजन्यत्वे शरीरादिजन्यत्वापत्तौ संसारितापत्तिरिति। न। ईश्वरानभ्युपगमे विचारस्याश्रयासिद्धत्वात्, तमभ्युप-गम्य पृच्छसि चेत्, तदाकर्णय जगत एव तदिच्छा-

---

'नहींति, यद्यपि करुणा परदुःखदर्शनजन्यदुःखे सत्येव सम्भव-तीतीश्वरे सा बाधिता, तथापि तद्दोषं स्फुटतयोपेक्ष्य दोषा-न्तराभिधानं प्रष्टव्यं। 'जगत इति प्रयोजनज्ञानवानेव प्रयत्नवा-निति नियमो न बाधको भगवति तदुभयसत्त्वादित्यर्थः, प्रयत्नः

---

(१) कर्म्मनिर्म्मितमेवेति ख०।

विषयत्वेन स्वेष्टसाधनताज्ञानसत्त्वात्। वस्तुतस्तु क्षित्यादितत्तदसाधारणक्रमिकादृष्टादिसामग्रीसमवहिता ईश्वरज्ञानादयो यदा भवन्ति तदा क्षित्यादिकं करोतीति व्यवहारः, सर्ग-प्रलयासाधारणक्रमिकादृष्टादिसामग्रीसमवहितत्वमेव[1] तदिच्छायाः चिकीर्षासञ्ज्ञिहीर्षात्वे। न चैवं किं तज्ज्ञानादिनेति वाच्यम्। क्षित्यादीनां कार्यत्वेन ज्ञानजन्यतया नित्यज्ञानादीनामपि जनकत्वात् सुखादिशब्दयोरात्माकाशादिवत्।

नन्वशरीरात्कथं वेद-घटादिशब्दव्यवहारसम्प्रदायः, उच्यते, सर्गाद्यावदृष्टोपगृहीतभूतभेदान्मीनशरीरोत्पत्त्यावदृष्टवदात्मसंयोगादृदृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानादिवक्षासहितान्मीनकण्ठ-ताल्वादिक्रिया-तज्जन्यसंयोगाद्वेदोत्पत्तिः, एवं कुलालादिशरीरावच्छेदेनादृष्टसहकृतप्रयत्नवदीश्वरसंयोगात्तद्बुद्धीच्छासहितात् प्रयत्नोत्पत्तौ[2] सकलघटा-

प्रयोजनधीजन्य एवेति तु नियमे तज्जन्यत्वमुपाधिरिति भावः। चिकीर्षा हि प्रयोजनज्ञानमपेक्षते इति प्रयत्नोऽपि तन्नियतउच्यते सा च भगवति नास्त्येवाप्रसादादिवत् या चास्ते सा च तन्नापेक्षते किन्त्वौपाधिकतयोपाधिमात्रमित्याह 'वस्तुतस्त्विति,

(१) समयवर्त्तित्वमिति ख०।
(२) तदिच्छासहितात् प्रयत्नोत्पत्ताविति क०।

कुलालव्यापाराद्‌घटोत्पत्तिः, एवं प्रयोज्यवृद्धप्रयोजकवृद्धभावादिमच्छरीररूपावच्छेदेनादृष्टसहकृतेश्वरज्ञानेच्छाप्रयत्नादेव वाग्व्यवहारः ततस्तद्दर्शी बालो व्युत्पद्यते, सोऽयं भूतावेशन्यायः।

यत्तु यथा लिप्यादिना मौनिश्लोकमनुमाय पठति[1] तथा सर्गान्तरोत्पन्नतत्त्वज्ञानवता भोगार्थं सर्गादावुत्पन्नेन मन्वादिना सर्वज्ञेश्वराभिप्रायस्थो वेदः साक्षात्कृत्यानूद्यते ततोऽग्रिमसम्प्रदायः, स एव च कायव्यूहं कृत्वा घटादिवाग्व्यवहारं प्रवर्त्तयतीति मतम्। तन्न। प्रतिसर्गाद्यनन्तसर्वज्ञकल्पनायां गौरवात् तेषामेव क्षित्यादिकर्तृत्वसम्भवेनेश्वरानतुमानाच्च[2]। एतेन सर्गादौ सर्गान्तरसिद्धयोगिन एव क्षितिकर्त्तारः सन्त्विति परास्तम्। सर्गादावनन्तसर्वज्ञसिद्धिश्च किं प्रमाणान्तरात् क्षित्यादिकर्तृग्राहकाद्वा, नाद्यः तदसम्भवात्। नान्त्यः अनादिद्व्यणुकादिकार्यप्रवाहस्य सकर्तृकत्वानुमानाल्लाघवसहकृतादेकस्यैव सर्वज्ञस्य सिद्धेः। अथेश्वरज्ञानमूलकशब्द-

'भूतावेशेति शरीरं यस्य भोगं जनयति तदीयं, ईश्वरस्य च न भोग-इत्यस्मदादिभोगावच्छेदकशरीर एवेश्वरप्रयत्नादिना चेष्टा भूताविष्ट-

(१) मौनिश्लोकोऽनुमाय पठ्यत इति ख॰।

(२) ईश्वरानुगमाच्चेति ख॰।

शक्तिग्रहे प्रयोज्यव्यापारानुमितघटज्ञाने घटशब्दस्य कारणत्वग्रहो भ्रमः स्यात् तदीयज्ञानस्य नित्यत्वात् तथाच तज्जन्यघटशब्दशक्तिग्रहस्य भ्रमत्वेन सकलशाब्दज्ञानं भ्रमः स्यात् भ्रमपरम्परामूलकत्वात्। अनित्यसर्वज्ञमूलकशाब्दग्रहे च नायं दोष इति चेत्। न। व्यापारानुमितमिदं घटज्ञानं घटपदजन्यमिति ज्ञानस्य शब्दशक्तिग्रहकारणस्य भ्रमत्वेऽपि घटपदं घटशक्तं इति ज्ञानस्य यथार्थत्वात् विषयाबाधात्। न च भ्रममूलत्वेनास्य भ्रमत्वमनुमेयम्। तदंशे अधिकरणप्रकाराभावेन बाधात् बाधितविषयत्वस्योपाधित्वाच्च[1]। अतएव घटमानयेति शब्दानन्तरं तृणसञ्चाराधिष्ठितदारुपुत्रकस्य घटानयनव्यवहारदर्शनात् बालो घटपदे व्युत्पद्यते तन्मूलकशाब्दज्ञानमपि न भ्रमः तस्यापि

---

शरीरे भूतप्रयत्नवदित्यर्थः, 'घटशक्तमिति घटानुभवजनकतावच्छेदकधर्मवदित्यर्थः, तथा हि तदपि ज्ञानं तदीयमेव तादृशमनुभवं विषयीकरोतीति येनाविशेषोऽपि तु सामान्यमेवेति भावः। कार्य्येणेति यद्यपि ईश्वरे कार्य्यत्वं सिद्धमिति वैषम्यं, तथापि क्षित्यादिकार्यानुत्पत्तिवद्घटादिलक्षणकार्यानुत्पत्तिरत्र मानमिति साम्यं द्रष्टव्यं। 'तस्येति, तथाचादृष्टाभावे दृष्टमेव न स्यात् इति दृष्ट-

---

(१) 'बाधात्' भ्रमत्वाभावात्, 'उपाधित्वात्' भ्रमत्वनिर्व्वाहकत्वादित्यर्थः।

भ्रमत्वे प्रयोज्यव्यवहारादिदानीं व्युत्पत्तिर्न स्यात् किमयं प्रयोज्यश्चेतनव्यवहारात् व्युत्पन्नोऽचेतनव्यवहाराद्वेति संशयस्य वज्रलेपायमानत्वादिति। "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावा-भूमी जनयन्देव एकः"॥ इत्यादि श्रुतयः[१] "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्त्यव्यय-ईश्वरः"॥ इत्यादि स्मृतयश्च मानत्वेनानुसन्धेया इति। स्यादेतत् ईश्वरवच्छक्तिरपि कार्य्येणैवानुमीयते, तथाहि यादृशादेव करतलानलसंयोगाद्दाहो दृष्टस्तादृशा-

सम्भदेवादृष्टे मानमिति भावः।

(१) 'एक' असहाय, 'देव' विश्वकर्म्मा, द्यावा भूमी जनयन् सन् 'बाहुभ्यां' बाहुस्थानीयाभ्यां धर्म्माधर्म्माभ्यां, सन्धमति धमतिर्गत्यर्थः सङ्गच्छते संयोगं प्राप्नोति, 'पतत्रैः' पतनशीलैः अनित्यैः पञ्चभूतैश्च सङ्गच्छते धर्म्माधर्म्मरूपैर्निमित्तैः पञ्चभूतरूपैरुपादानैश्च साधनान्तरं विनैव सर्व्वं सृजतीत्यर्थः। यद्वा धर्म्माधर्म्माभ्यां भूतैश्च सन्धमति सङ्गमयति जीवान्, णिजन्तत्वं बोध्यं। कीदृशः 'विश्वतश्चक्षुः' विश्वतः सर्व्वतः चक्षूंषि यस्य सः। 'विश्वतो मुखः' विश्वतो मुखानि यस्य। 'विश्वतो बाहुः' विश्वतो बाहवो भुजा यस्य। 'उत' अपिच, विश्वतः पादा यस्य स, पादस्य लोपोऽहस्त्यादिभ्य इति पादस्यान्त्यलोपः। परमेश्वरस्य सर्व्वप्राण्यात्मकत्वात् यस्य यस्य प्राणिनो ये चक्षुरादयस्ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्व्वत्र चक्षुरादय सम्पद्यन्त इत्यर्थः।

देव प्रतिबन्धकसत्त्वे सति[1] न जायते, अतो यदभावात्कार्याभावस्तदभ्युपेयं वह्न्यादौ, तेन विना तदभावायत्तदाहाभावानुपपत्तेरिति व्यतिरेकमुखेन शक्तिसिद्धिः। न चादृष्टवैगुण्यम्, दृष्टसाद्गुण्ये तदभावात् तस्य तदर्थत्वात् अन्यथा दृढदण्डनुन्नमपि चक्रं न भ्राम्येत्। अथादृष्टविलम्बादपि विलम्बो यथा वन्ध्यास्त्रीसम्प्रयोगे[2] परमाणुकर्मणि अध्ययनतुल्यत्वेऽपि एकत्र फलाभावे चेति चेत्। न। अदृष्टविलम्बो हि न तन्नाशानुत्पादौ मण्यपसारणानन्तरं दाहाभावप्रसङ्गात्। किञ्च नियमतो मणिसद्भावे कार्याभावस्तदभावे कार्यमिति दृष्टत्वात् मण्याद्यभाव एव कारणम्। अन्यथा कदाचिन्मण्याद्यभावेऽपि तदभावात् कार्यं न स्यात् वन्ध्यासम्प्रयोगे तु दृष्टव्यभिचाराददृष्ट-

'मण्यपसारणेनेति नाशपक्षेऽदृष्टाभावादनुत्पादपक्षे तदोत्पादकेनाभावादिति भावः।

ननु तदेव मण्यपसारणम् अदृष्टमुत्पादयेदित्यरुचेराह 'किञ्चेति, तथाच प्राथमिकोपस्थितिकत्वात् तद्धेतोरेवेति न्यायान्मण्यादिविरह एव हेतुरस्त्विति भावः। 'वन्ध्येति अत्रादृष्टानुत्पाद एव विलम्बः

(१) सति प्रतिबन्धक इति ख॰।

(२) "वन्ध्यास्त्रीमैथुनं यथा" इत्यादिवद्धतरार्षप्रयोगसत्त्वेऽपि अस्मदादीनां तथा प्रयोगस्य न समीचीनत्वं, परन्तु "वन्ध्यस्त्रीसम्प्रयोगे" इत्येव पाठो भवितुमर्हतीति।

विलम्बादेव विलम्बः अदृष्टञ्च क्वचित् साक्षाज्जनकम्। अन्यथा परम्परया हेतुरपि न स्यात्। न च समप्रज्ञयोः समञ्च निरन्तरमभ्यस्यतोरेकः प्रगल्भो नापर इति दृश्यते। न च सर्वोत्पत्तिमतामदृष्टं निमित्तकारणम्, अगम्यागमनादिसाध्ये सुखे व्यभिचारात्, तद्धि नाधर्मात्सुखत्वात्, नापि धर्मात् तेन हि अगम्यागमनमुत्पाद्य सुखमुत्पादनीयम्, तथाचागम्यागमनकारणत्वेन न स धर्मः श्येनापूर्ववन्निषिद्धफलकत्वेनानर्थकत्वात्। दाहप्रतिकूलादृष्टादेव दाहाभाव इति चेत्। न। तस्योत्तेजकाभावसहकृतमण्यजन्यत्वे तथादाहार्थिनोऽप्रवृत्तिप्रसङ्गात् तज्जन्यत्वेऽपि तदुत्पादकादेव दाहाभाव इति किमदृष्टेनाप्रथमोपस्थितत्वात्

---

अतः पुंसेष्युत्पादितेऽदृष्टे तथैवापत्योत्पत्तिसत्त्वाददृष्टं विजातीयमेवेति भावः। 'न चेति, तथाच तदुत्पत्तिप्रतिबन्धकस्यैव मतिबन्धकाभावस्य कारणत्वमिति भावः। 'श्येनेति दृष्टनालक्षणोऽर्थो धर्म इत्यत्रार्थपदेन श्रेयस्करार्थकेन श्येनापूर्वमनर्थरूपं व्यावृत्तं तस्य निषिद्धशत्रुवधजनकत्वेनाश्रेयस्करत्वादिति भाष्यं, तदुभयमपि न धर्म इत्यर्थः। यद्येवं शत्रुवधोऽपि नाधर्मादिष्टत्वात् न धर्मादनर्थत्वादिति श्येनापूर्वमपि न तज्जनकं तृतीयकोटिर्वा स्यादित्यगम्यागमनजन्यसुखेऽप्ययमाक्षेपो नास्ति, किन्तु तथाऽदृष्टाजनकत्वोद्भावन-

उपजीव्यत्वाच्च। प्रतिबन्धकाभावहेतुत्वस्य तेनाभ्युपगमात् अदृष्टोत्पत्तौ शौचाचमनादेः साधारणस्यावाप्यन्वयः स्यात्, अशुचेरेव तदुत्पत्तौ शौचे सति तदभावापत्तेः प्रतिपक्षसन्निधापकादृष्टस्यैव प्रतिबन्धकत्वे सति मण्यप्रयोगेऽपि दाहानापत्तिः अग्रिमकाल एव सन्निधिदर्शनेन तदसिद्ध्यभावात् अस्तु तर्हि उत्तेजकाभावसहकृतप्रतिबन्धकाभावस्यान्वय-व्यतिरेकाभ्यां हेतुत्वम्। एवं केवलोत्तेजकसद्भावे उभयसत्त्वे उभयाभावे च विशिष्टाभावोऽनुगतो हेतुः प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम्, तच्च मण्यभावत्वेन न तु प्रतिबन्धकाभावत्वेनेति नान्योन्याश्रयः। अतएव प्रतिबन्धकत्वाभिमतमण्यादीनां अभावकूट एव कारणं तेन मणिसद्भावे मन्त्राद्यभवेऽपि न कार्यम्। अनतिरिक्ताभाववादिमते च व्यवहारार्थं तत्स्थानाभिषिक्तस्य हेतुत्वम्। न चाभावो न कारणम्, भाववत्तद्ग्राहकनीत्यात्, दृष्टञ्च कुड्यसंयोगाभावस्य गतौ, अनुपलब्धे-

मपि न प्रकृतोपयोगि तच्च कारणमध्यत्वौ प्रतिबन्धदर्शनात् अपि च कश्चित् सुखीत्याद्यदृष्टमाधकं तच्च कार्यमात्रहेतुत्वे मानं, अत्रापि परस्येष्टमभिमतमित्यपन्यस्तं अतएवातिनिर्दिष्टतया सिद्धान्ते निराकरणं स्फुटमुपेक्ष्यैव सूचितमिति ध्येयं।

श्वाभावज्ञाने, विहिताकरणस्य प्रत्यवाये, निर्दोषत्वस्य वेदप्रामाण्ये जनकत्वमिति प्राञ्चः। नैवम्। विशिष्टं हि नार्थान्तरं येन तदभावोऽनुगतः स्यात्, किन्तु विशेषण-विशेष्यसम्बन्धा इति तेषां प्रत्येकाभावस्य हेतुत्वे क्वचिद्विशेष्यमात्राभावः क्वचिदुत्तेजकाभावरूप-विशेषणाभावः क्वचिदुभयं कारणमिति व्यभिचारे-णैकमपि हेतुर्न स्यात्। स्यादेतत् प्रतियोगिभेदादि-वत्प्रतियोगितावच्छेदकविशेषणभेदादप्यभावो भिद्यते, अन्यथा पृथिव्यादिचयप्रत्येकरूपाभावेऽवगतेऽपि वायौ रूपसंशयो न स्यात्। एवञ्च यथा केवलदण्ड-सद्भावे दण्ड-पुरुषसद्भावे द्वयाभावे च विशेषण-विशे-ष्योभयविरहप्रयुक्तः केवलपुरुषाभावोऽबाधितानुगत-व्यवहारबलात् प्रतीतिसिद्धः तथा विशेष्यस्य प्रति-

---

'प्रतियोगीति यथा प्रतियोगिभेदादभावभेदः तथा प्रतियोगिता-वच्छेदकभेदादपि स्यादित्यर्थः, वस्तुतः प्रतियोगिभेदात् तद्भेदः असिद्ध एव सम्बन्धितावच्छेदकभेदेनैव समसम्बन्धिकभेदात् घटप्रति-योगिकान्योन्यात्यन्ताभावयोरभेदप्रसङ्गाच्चेति प्रतियोगितावच्छेदक-भेद एव तत्र तन्त्रमित्युक्तत्वादिति। तच्चैवं सिद्धेऽर्थापत्तिमपि प्रमाणयति 'अन्यथेति, 'प्रयुक्त इति तावदभावान्यतमव्याप्य इत्यर्थः। 'अनुगतेति, यद्यपि शब्दप्रयोगरूपे व्यवहारे व्यभिचारो नानार्थ

बन्धकस्याभावे विशेषणस्योत्तेजकाभावस्याभावे उभयाभावे च[1] केवलप्रतिबन्धकाभावो विशेष्य-विशेषणोभयाभावव्यापकोऽनुगतएव दाहकारणमस्तु। अथ विशेषणाद्यभावैरेव केवलपुरुषाद्यभावव्यवहारः एकशक्तिमत्त्वादिति चेत्। न। अनुगतव्यवहारस्यानुगतज्ञानसाध्यत्वात् शक्तेश्चातीन्द्रियत्वात्। अथोत्तेजकप्रयोगकाले मणेः कोऽभावः, न तावत्प्राक्प्रध्वंसाभावौ, तयोः प्रतियोगिसमानकालत्वात्। न च श्यामोऽयमासीदित्यत्र श्यामध्वंसप्रयुक्तः श्यामघटत्वेन पक्वघटस्य ध्वंस एव न तु घटत्वेन तथोत्तेजकाभावध्वंसप्रयुक्त उत्तेजकाभाववत्त्वेन मणेः ध्वंस एवेति वाच्यम्। ध्वंसस्यानन्तत्वेन उत्तेजकापनयेऽपि दाहप्रसङ्गात्। नाप्यत्यन्ताभावः, तस्य कादाचित्कत्वाभावादिति चेत्। न। यथा दण्डोपनयापनयदशायां

---

शब्दानुगमात् अन्यादृशस्य व्यवहारोऽप्यननुगत एव विषयाननुगमात् ज्ञानरूपे च व्यवहारेऽन्वय एवेत्यप्युक्तं, तथापि ज्ञानानुगमस्य विषयानुगमसाध्यत्वादित्यत्र नियमे तात्पर्यं, श्यामध्वंसप्रयुक्तस्थितो न तु तज्जन्यः समसमयत्वादिति ध्येयं, न तु घटत्वेन घटश्यासीदिति प्रत्ययाभावादिति भावः।

---

(१) द्वयाभावे चेति ख०।

केवलपुरुषाभाव उत्पाद-विनाशवान् अन्यथा अबाधितकेवलपुरुषाभाव-तदभावव्यवहारयोरुपपादयितुमशक्यत्वात् तयोत्तेजकोपनयापनयशृङ्खलायां प्रतिबन्धकाभावोऽपि तथैव स्वीकरणीयः तुल्यन्यायत्वात्। यदि च संसर्गाभावत्रयवैधर्म्यात्तत्र नान्तर्भवति तदा तुरीय एव संसर्गाभावोऽस्तु, न हि क्लृप्तविशेषबाधे सामान्यबाधः, विशेषान्तरमादायापि तस्य सम्भवात्। अन्यथा क्लृप्तानादिसंसर्गाभावादिवैधर्म्येण ध्वंसोऽपि न सिध्येद्व्यवहारान्यथानुपपत्तिश्च तुल्यैव, सोऽयमस्माकं सगोत्रकलहो न तु शक्तिवादः। अस्तु वा ध्वंस एवासौ संसर्गाभावविभागे अन्या-

'उत्पाद-विनाशवानिति तादृशाभावाभ्युपगमेऽपि तत्यभावेन समाधिसौकर्यादुक्तं। वस्तुतस्तूत्तेजकापनये तस्योत्तेजकाभावावच्छिन्नस्य सत्त्वेन पूर्वोत्पन्नोत्तेजकाभावावच्छिन्नमणिध्वंसस्य विद्यमानत्वेऽपि तदुत्तेजकाभावावच्छिन्नतन्मण्यभावाभावाच्च दाहापत्तिः तादृशयावदभावस्य जनकत्वादित्यवधेयं। ननु उक्तक्रमेण व्यवहारान्यथोपपत्तिरस्त्येवेति मनसिकृत्याह 'सोऽयमिति, तथाचोक्तक्रमेण ध्वंसएवास्तूत्पाद-विनाशवान् अन्योवेत्युभययापि न शक्तिसिद्धिरिति भावः।

ननु तुरीयसम्बन्धाभावस्वीकारे विभागव्याघात इत्यनुक्तिसम्भव एवैष कल्प इत्यत आह, 'अस्त्विति। ननु परिभाषा न पर्य्यनुयो-

भावत्वेन ध्वंसस्य विभजनात्। न चैवं विनाशित्वेन प्रागभाव एव सः परिभाषाया अपर्यनुयोज्यत्वात्। यद्वा अत्यन्ताभाव एवासौ तस्य नित्यत्वेऽपि कदाचित्प्रतीति-कार्य्यानुदयौ प्रत्यासत्तिकादाचित्कत्वात्, प्रत्यासत्तिश्च विशेषणाभावो विशेष्याभाव उभयाभावश्च, तदैव विशिष्टात्यन्ताभावसत्त्वादिति। तन्न। यदि ध्वतीतविशेषणावच्छेदेन विद्यमानस्यैव विशेष्यस्य ध्वंसः स्यात् तदा क्षणरूपातीतविशेषणावच्छिन्नत्वेन घटस्य विनाशः स्यादिति क्षणभङ्गापत्तिः। किञ्च विद्यमानस्य विनष्टत्वेनाप्रतीतेः शिखा विनष्टा पुरुषो न विनष्ट इति विपरीताबाधितप्रत्ययाच्च न विशेषणाभावेऽपि विशेष्यध्वंसः, श्यामोऽयमासीत्

---

ज्येति सत्यं परन्तु परिभाषा कश्चिन्नर्थे इत्यत्र नियामकाभावेन नियमसन्देहतया अपरितुष्यन् परिभाषया कल्पान्तरमाह, 'यद्वेति। 'तदैवेत्यनन्तरं तदैवेति शेष.। 'यदि ध्वतीतेति, अत्र यद्भिन्नविशेष्यतावच्छेदकावच्छिन्नप्रतियोगिकः प्रतिक्षणं ध्वंसो नेष्यत एवेतीदृशक्षणभङ्गेऽपि नानिष्टापत्तिः। न च प्रत्यभिज्ञाविरोधः, समानप्रकारकस्यैव ज्ञानस्य विरोधितयाऽवच्छेदकान्तरावच्छिन्नध्वंसबुद्धावपि घटत्वावच्छेदेनाभेदबुद्धेर्बाधाभावात्। अतएव 'विद्यमानस्येत्यादिकमपास्तं, यदवच्छेदेन विद्यमानत्वं तदवच्छिन्ननाश-

केवलोऽयममासीत्पुरुष इत्यादौ "सविशेषणे हीति न्यायेन[१] विशेष्यवति श्याम-कैवल्यादिध्वंस एव प्रतीयते ध्वस्तस्य ध्वंसानुपपत्तेश्च न विद्यमानस्य ध्वंसः। एतेनोत्तेजकसद्भावे सत्युत्तेजकाभावविशिष्टमणेरुत्पन्नध्वंसस्योत्तेजकापनयसमये ध्वंसो जातोऽध्वस्तस्य ध्वंसः कारणमिति न विफल उत्तेजकापनय इत्यपास्तम्। विद्यमानध्वंसस्य च ध्वंसाभावात्। न च ध्वंसान्यः संसर्गाभावोविशिष्टाभाव इति वाच्यम्। उत्पन्ना-

---

प्रतीत्यभावात्, 'शिखा विनष्टेत्यादिकमपि विशेष्यतावच्छेदकावच्छिन्नविशेष्यध्वंसाभावमवगाहत इति नोपन्यस्तबाधकं। अतएव 'सविशेषणे हीत्यादिन्यायावतारोऽपि विशेष्ये बाधे सत्येव तथात्वात् अन्यथा विशिष्टविधि-निषेधोच्छेदापत्तेः। नापि ध्वस्तस्य ध्वंसानुपपत्तिः, एतादृशध्वंसे सत्यपि भावोन्मज्जनाप्रसङ्गेन बाधकाभावात्। नैवं प्रत्यभिज्ञानुपपत्तेः। न च सामान्यतोऽभेदः तस्या विषयः, तत्प्रतियोगिकभेदसामान्याभावस्यैव प्रत्यभिज्ञाविषयत्वात्, अन्यथाऽनभिमतक्षणभङ्गस्याप्यापत्तेः बाधिकायाः प्रत्यभिज्ञायाः उक्तक्रमेण सामान्यावच्छिन्नप्रतियोगिकभेदाभावावगाहितया भिन्नविषयत्वेनाबाधकतया प्रत्येकक्षणवृत्तिघटानामन्योन्यभेदस्य बाधकाभावेन

---

(१) सविशेषणे हि विधि निषेधौ सति विशेष्ये अन्वयबाधे विशेषणमुपसंक्रामत इति न्यायेनेत्यर्थः।

भावस्य विनष्टप्रतीतिहेतुतया[1] ततोऽपि विद्यमानस्य विनष्टत्वप्रत्ययापत्तेः। नापि विशिष्टाभावोऽत्यन्ताभावः तथा हि स एव क्वचिद्विशेषणाभावसहितः क्वचिद्विशेष्याभावसहितो दाहकारणमित्यननुगमस्तदवस्थ एव विशेषण-विशेष्याभावयोः प्रत्यासत्तित्वावच्छेदकानुगतधर्माभावात्। अथ विशिष्टविरोधित्वं विशेषण-विशेष्याभावयोरनुगतं तदवच्छेदकमस्ति तयोः सत्त्वएव विशिष्टात्यन्ताभावसत्त्वादिति चेत्, तर्हि विशिष्ट-

---

प्रमितेः। न च हेत्वभावात्तत्र प्रतिघर्षं घटस्यानाशेनाभेदसिद्धौ प्रत्यभिज्ञापि तदभेदमवगाहते बलवति विषये योग्ये प्रतीत्यभावस्यासम्भवादिति वाच्यम्। प्रकृतेऽपि समानत्वात्, न हि तत्तत्क्षणावच्छिन्नघटनाशे योनिजकाभावावच्छिन्नसमवायादिनाशे वा कारणमस्ति, समवाय्यादिनाशं विना द्रव्याद्यनाशात्। न च क्षणान्तरोत्तेजकयोरेवोत्पादको नाश इति वाच्यम्। सामान्यसामग्र्यभावे विशेषसामग्र्या अकिञ्चित्करत्वात् असामान्याश्रयस्य कार्यस्योत्पत्त्या सामान्य-विशेषभावभङ्गप्रसङ्गात्। न च विशेष्यतावच्छेदकावच्छिन्नद्रव्यादिनाशं प्रति समवायिनाशो हेतुर्न द्रव्यनाशमात्र इति न सामान्यसामग्रीति वाच्यम्। प्रथमप्रवृत्तिकतया लाघवेन च द्रव्यनाशमात्र एव तत्सामग्रीत्वात्। न हि प्रथमप्रवृत्तिसमये

---

(१) विशिष्टप्रत्ययहेतुतयेति ख०।

विरोधित्वेनानुगतेन तयोरेव हि विशिष्टाभावत्वेन दाहव्यवहारादौ जनकत्वमस्तु कृतं तदुपजीविनातिरिक्तविशिष्टाभावेन । अथोत्तेजककाले विद्यमानात्यन्ताभावानुवृत्तावप्युत्तेजकापनयने उत्तेजकाभावव्यक्तिर्या जाता तदवच्छिन्नमणेरभावो न तथेति तदा न कार्योदयः तत्तदुत्तेजकाभावविशिष्टमणेरभावकूटस्य जनकत्वादिति चेत् । न । तत्तदुत्तेजकाभावानामननुगतत्वेनानुगतविशिष्टाभावव्यवहारानुपपत्तेः उत्तेजकाभावत्वेनानुगमेऽतिप्रसङ्ग एव । अथ विशेषण-विशेष्याभावयोर्विशिष्टविरोधित्वमनुगतकारणतावच्छेदकं यत्र तदन्यतराभावस्तत्र न विशिष्टम् यत्र विशिष्टं तत्र

---

उक्तरूपो नाशः प्रमितो येन तदनुरोधात् प्रामाणिकतया गौरवमप्यादृत्य तादृशद्वयनाशं प्रति हेतुता कल्प्येत । न चोत्तरकाले विशिष्टाभावानुगमस्यावश्यकतया तत्प्रामाणिकतायां प्रतिवन्धप्रथमकल्पनामनादृत्य कल्पनान्तरं, प्रथमकल्पनया लाघवसहकारेण बलवत्या विरोधिन्योत्तरस्या गुरुकल्पनायाः अनवकाशात् अनुगमस्यान्यथासिद्ध्या गौरवस्य प्रमाणवत्त्वाभावात् । एतेनोत्तेजकाभावाभाव एव विशिष्टाभावादिजनक इति परास्तं । सामान्यसामग्र्यभावे विशेषसामग्र्या अकिञ्चित्करत्वात् इत्युक्तत्वात् उत्तेजकप्रयोगानन्तरकाले दाहानापत्तेश्च । तदुत्तरकाले दाहजनकविशिष्टध्वंसस्य तेन जनना-

न तयोरभाव इति सहानवस्थाननियमस्य विरोधस्यानुभवसिद्धत्वादिति चेत्। न। सहानवस्थाननियमो न परस्परविरहरूपतया विशेषण-विशेष्याभावस्य प्रत्येकं विशिष्टाभावतया तत्प्रत्येकाभावाभावस्य विशिष्टत्वापत्तेः[१] तथाच विशेषण-विशेष्ययोः प्रत्येकं विशिष्टत्वापत्तिः तदभावस्य तत्त्वात्। न चोभयाभावाभाव उभयं विशिष्टम्। एवं ह्यभावद्वयं विशिष्टाभावो न तु प्रत्येकाभावरूप इति प्रत्येकाभावात् विशिष्टाभावव्यवहारो न स्यात्। नापि परस्परविरहव्याप्यत्वं तदाक्षेपकत्वं वा, विशेषण-विशेष्याभावस्य विशिष्टाभावत्वेन तदव्याप्यत्वात्तदनाक्षेपकत्वाच्च, अभेदे तयोरभावात्। एतेनान्यदपि विशिष्टव्यवहारविरो-

भ्युपगमादिति। एतच्च विशेषणावच्छिन्नध्वंसे ध्वंसे भावोऽभ्युपगमापत्तिः सामान्यत एवाभावाभावस्य भावत्वादित्यपि वदन्ति। विशिष्टविरोधित्वं विशिष्टाभावरूपत्वं वा, तदनुमापकत्वं वा, तदभावव्यापकाभावप्रतियोगित्वं वा, यद्विकल्पयता सर्वमपि विशिष्टाभावेनानुगमयितव्यम्। अथाननुगमे शब्दाननुगमस्य व्यर्थत्वात् तथाचानुगते तस्मिन् किमनेन, अननुगते तु कथमिदमप्यनुगतमिति दोषं स्फुटतयोपेक्ष्य दोषान्तरमाह, 'सहानवस्थाने'त्यादि।

(१) तत्प्रत्येकाभावाभावस्य प्रत्येकं विशिष्टत्वापत्तेरिति क०।

धित्वादिनानुगतत्वमपास्तम्। केनाप्यनुगतेन रूपेण विशेषण-विशेष्याभावस्य विशिष्टाभावत्वे प्रत्येकाभावाभावस्य विशेषण-विशेष्यान्यतरमात्रस्य विशिष्टत्वापत्तेः तदभावाभावस्य तत्त्वादित्युक्तत्वात्, तस्माद्विशेषण-विशेष्याभावो विशेषणावच्छिन्नविशेष्याभावो न विशिष्टाभाव इति। अत्रोच्यते, विशेषण-विशेष्ययोः सम्बन्धाद्विशिष्टव्यवहार इति तयोः सम्बन्धाभावा-

'सम्बन्धाभावादिति। ननु सम्बन्धाभावोऽपि नाविशिष्टोविशिष्टाभाव इति विशेषण-विशेष्योभयप्रतियोगिकसम्बन्धाभावोवाच्यः सोऽपि विशिष्टाभाव इति क्वचिद्विशेषण-विशेष्यप्रतियोगिलघोर्विशेषयोरभावात् क्वचिद्विशेष्यसम्बन्धाभावादित्यनुगमेन सोऽपि सम्बन्धाभावो वाच्य इति तथाप्येवं विकल्पेनाननुगततदवस्थ इति। किञ्च किमनुगतविशिष्टाभावेन दाहलक्षणानुगतकार्यस्यान्यथैवोपपत्तेः तथाहि विशिष्टाभावोऽपि दाह्यनिष्ठोदाहहेतुर्वाच्यः व्यधिकरणस्यातिप्रसक्तेः, तद्वरमुत्तेजकाभावविशिष्टमणौ दाह्यसम्बन्धाभाव एव विशिष्टाभावात्मानुगतो दाहहेतुरस्तु किमनुगतेन विशिष्टाभावेन। किञ्च प्रतिबन्धकाभावो यदि दाहहेतुस्तदानुगमाय विशिष्टाभावो निर्वाच्यः स एव तु न कारणं प्रमाणाभावात्प्रतिबन्धककालीनकार्यं प्रत्युत्तेजकरूपविशेषसामग्र्यन्तरकल्पनेनैव सर्वसामञ्जस्येन तद्धेतुत्वयाहकान्वयादेरन्यथापि सिद्धत्वात् इति, अत्र ब्रूमः, प्रतियोगितावच्छेदकावच्छि-

यश्च प्रतिबन्धकाभाव उत्तेजकञ्च दाहकारणं, तथाचो-भयाभावे उत्तेजकासत्त्वे परं दाहः स्यात्, उत्तेजकवति प्रतिबन्धके दाहो न स्यादिति चेत्। न। अधिकरणा-भावयोरेव स्वरूपसम्बन्धः तयोर्घटवद्भूतलघटवत्त्वरीयमद-भावयोरपि स्वरूपसत्त्वे घटवति घटाभावव्यवहारा-

---

लेन सम्प्रतिपत्तेः। यत्तु विशिष्टे दाहसंयोगाभाव एव हेतुरित्य-न्यथासिद्ध्युपवर्णनं, तन्न, न हि दाहाद्यन्यथानुपपत्त्या तत्कल्पनं येना-न्यथासिद्धिः, अपि तु प्रतियोगितावच्छेदकभेदेनाभावभेदस्य प्रामा-णिकत्वेन। न च क्लृप्तेऽपि तस्मिन्न हेतुत्वं सुतरामन्यथासिद्धेरिति वाच्यम्। दाहसंयोगाभावस्य व्यधिकरणतया दाहसमानाधिकरणस्य दाह-निष्ठोत्कविशिष्टाभावस्य जनकत्वेन तस्यैवान्यथासिद्धेः। यत्र उत्तेजक-रूपा विशेषसामग्र्येव हेतुरस्तु इति विशिष्टाभावान्यथासिद्धिरिति, तदपि न, प्रतिबन्धकाभावहेतुत्वमग्रहीत्वा उत्तेजकहेतुत्वस्याप्यग्रा-सम्भवेनोपजीव्यविरोधात्, तथा हि प्रतिबन्धके सति कार्यादर्शन-मथ्ययति च दर्शनमन्तरेणोत्तेजकान्वयाद्यनुविधानासम्भवः सामान्य-सामग्रीत एव कार्यसम्भवात् तद्दर्शनेन तु तदभावहेतुत्वनिश्चये सत्यपि प्रतिबन्धके सति उत्तेजकसमवधानाज्जायमानो दाहोऽव-च्छेदकान्तरं कल्पयति न तु कारणान्तरमुपजीव्यविरोधात्। न च प्रतिबन्धकाभावत्वावच्छेदेन हेतुत्वग्रहादवच्छेदकान्तरकल्पनेऽपि उप-जीव्यविरोधः तत्परित्यागादधिकस्य च तत्प्रवेशात्। वस्तुतोऽवच्छेदक-मधीनोपजीव्या अवच्छेदकमन्तरेणापि प्रतिबन्धकाभावहेतुत्वग्रह-

पत्तेः, किन्तूपश्लिष्टस्वभावत्वं, तच्च सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वम्। न च घटवद्भूतल-चत्वरीयतदभावयोर्विशिष्टप्रत्ययजननयोग्यत्वमस्ति, घटवति कदापि घटाभावप्रत्ययानुदयात्, तदिहापि प्रतिबन्धकोत्तेजकाभावयोर्विशिष्टप्रत्ययजननयोग्यत्वं स्वरूपसम्बन्धः, अन्ययोत्तेजकवति प्रतिबन्धके चत्वरीयोत्तेजकाभावविशिष्टप्रत्ययापत्तेः, तादृशस्वरूपसम्बन्धाभावश्च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाभावे चाविशिष्ट एव।

---

सम्भवात् प्राथमिकत्वस्यैव दैववशसम्पन्नत्वात्। किञ्च उत्तेजकमननुगतमिति न दाहहेतुः विशिष्टाभावहेतुत्वे चाननुगतानामपि तेषां यावन्तोऽभावाः तावद्विशिष्टमण्यभावस्यानुगतस्य सम्भवेन स एव दाहहेतुर्न तु विशेषणाभावान्तरकल्पनमिति सङ्क्षेपः।

'तस्येति, 'सम्बन्धान्तरमित्यादिकं सम्बन्धत्वमिति, तदवच्छिन्नाभाव इति भावः।

ननु सम्बन्धसत्त्वेऽपि विशेषण-विशेष्यप्रतियोगिकसम्बन्धत्वावच्छिन्नात्यन्ताभावः कारणमुच्यते प्रतियोगितावच्छेदकावच्छिन्नेन सम्बन्धाभावस्य विरोधो नान्येन, तेन सम्बन्धत्वावच्छिन्नसत्त्वेऽपि नोक्तात्यन्ताभावो विरुध्यते तदर्थं लाघवाद्विशेषणावच्छिन्नविशेष्यात्यन्ताभाव एव हेतुरस्तु उक्तयुक्त्या तदपेक्षया प्रामाणिकत्वेन लघुतया च अन-

यद्वा अदण्डपुरुषस्याभावे दण्डी पुरुषो न प्रतियोगी तस्यादण्डत्वाभावात् किन्तु तदन्यः(१), तस्याभावो दण्डिसद्भावेऽपि दण्डाभावसत्त्वे उभयासत्त्वे चाविशिष्ट इति तस्मात् केवलपुरुषाभावव्यवहारोऽनुगतः। तदुक्तं न हि दण्डिनि सत्यदण्डानामन्येषां नाभावः, किन्तु दण्डाभावस्यैवेति युक्तं, अन्यथा तत्रान्येषामिति पदस्य व्यर्थतापत्तेः, तथा केवलप्रतिबन्धकाभावे उत्तेजकसहकृतः प्रतिबन्धको न प्रतियोगी तस्य केवलत्वाभावात् किन्तु तदन्यः, तदन्यस्य च केवलप्रतिबन्धकस्याभावे

कार्यसम्भवात्, एवञ्चोत्तेजकाभावावच्छिन्नमण्यत्यन्ताभावः कारणं न तु ध्वंस इति न क्षणिकत्वप्रसङ्गः। न चात्यन्ताभावस्य सदातनत्वेन प्रागपि कार्य्योत्पत्तिः, नियमेन यदाभावस्तद्देश-समयविशेषावच्छिन्नसम्बन्धसत्त्वस्याकर एव स्फुटत्वादिति पूर्वाक्षेपाद्याशङ्कितमेव निर्दोषतया सिद्धान्तयति, 'यद्वेति. 'दण्डी पुरुष इति दण्ड-पुरुषत्वं न प्रतियोगितावच्छेदकमित्यर्थः, एवमग्रेऽपि, 'किन्तु तदन्यः' तदभाववानित्यर्थः, तथाच तदभाववत्त्वं प्रतियोगितावच्छेदकमिति भावः। यथाश्रुते तु तस्यैव समयभेदेनादण्डतयोक्ताभावप्रतियोगित्वेन तदन्यत्वाभावात् भेदाभेदानभ्युपगमादिति दोषः, 'अदण्डानामन्येषां' दण्डाभाववत्त्वावच्छिन्नानामित्यर्थः, 'अन्यथेति यदि विशेषणाभाव एव न विशेषणावच्छिन्नविशेष्याभावः तदा, 'अन्येषामितीति

(१) तदन्यः प्रतियोगीति ख०।

उत्तेजकसहितप्रतिबन्धकसत्त्वे उत्तेजकमात्रसत्त्वे उभयासत्त्वे वा विशिष्ट एवेति नाननुगमः। उत्तेजकापनये च केवलप्रतिबन्धकोऽस्तीति न तदभाव इति दाहो न भवतीति। ननु न प्रतिबन्धकाभावः कारणम् एकदण्डान्वये घटोत्पत्तिवत्प्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकान्तराभावेऽपि[1] कार्यानुदयात्, न हि यावत्कारणतावच्छेदकावच्छिन्नं तावदन्वये कार्यमिति चेत्। न। प्रतिबन्धकाभावत्वेन न कारणत्वमन्योऽन्याश्रयात् किन्तु मण्याद्यभावत्वेनेत्युक्तत्वात्, तत्त्वेऽपि वा घटे दण्डसलिलादिवत्प्रतिबन्धकाभावकूटस्य दाहहेतुत्वात्।

यद्वा प्रतिबन्धकत्वावच्छिन्नप्रतियोगिक एवाभावः कारणम् स च यावद्विशेषाभावनियत इति न प्रतिबन्धकसत्त्वेऽपरप्रतिबन्धकाभावेऽपि कार्य्योदयः प्रति-

विशेष्यवाचकपदानुपादानापत्तिरित्यर्थः। 'उत्तेजकापनय इति, पुनरुत्तेजकप्रयोगे उत्तेजकाभावावच्छिन्नतन्मण्यभावोऽस्त्येवोक्तयुक्तेरिति स्मर्त्तव्यं। ननु कार्य्यानुत्पादनियतत्वं प्रतिबन्धकत्वमिति नान्योन्याश्रयत्वमित्यत आह, 'तत्त्वेऽपि वेति। नन्वेवमन्योन्याश्रयाभावे तत्सामान्याभाव एव लाघवाद्धेतुर्न तु यावत्तदभावा इत्यरुचेस्तदेव सिद्धान्तयति, 'यद्वेति। वस्तुतस्तु व्यवस्थितविकल्पोऽयं यत्रोत्तेजक-

(१) तदन्यप्रतिबन्धकाभावेऽपीति ख०।

बन्धकस्य च संसर्गाभावो हेतुः तेन तत्सत्त्वे तदन्यो-ऽन्याभावेऽपि न कार्य्यम्। अन्वय-व्यतिरेकाभ्यां व्याप्ति-कारणत्वयोर्ग्रहे संसर्गाभावस्य त्वयापि हेतुत्वाङ्गी-कारात् अन्यथा सामग्रीव्यापकयोः सत्त्वे तदन्योऽन्या-

---

भस्ति तन्मोत्तेजकाभावावच्छिन्नतदत्यन्ताभावस्य सामान्याभावत्व-सम्भवात् तत्सामान्याभावो हेतुरेव तत्रास्ति यथानुमित्यादौ बाधादिः तत्र तत्सम्बन्धाभावमात्रस्य हेतुतया प्रागभाव-प्रध्वंसा-दिसाधारणविधात्मकसामान्याभावासम्भवात् यावद्विशेषाभावकूटस्य कारणत्वं तदभिप्रायकस्य सम्बन्धाभावत्वेन प्रतिबन्धकाभावस्य हेतु-तया प्रागभावादिरपि तस्य हेतुरित्यादिपन्थाः, अन्यथोत्तेजकाभाव-विशिष्टप्रतिबन्धकाभावस्यात्यन्ताभावतया तुरीयतया वा उभय-थापि न प्रागभाव-प्रध्वंसयोर्हेतुत्वमिति विरोधापातात्। 'प्रतिबन्ध-कस्य चेति, यद्यपि उत्तेजकाभावावच्छिन्नाभावस्यात्यन्ताभावात्मक-तया तदन्योन्याभावमादायातिप्रसङ्ग एव नास्ति अभावकूटहेतु-तापक्षेऽप्यन्योन्याभावमादायातिप्रसङ्ग एव न यावदभावाधीनकार्य्य-स्यैकस्मादनुत्पत्तेरिति, तथापि यावदभावहेतुता हि न यावता-मभावानां हेतुता एकत्र प्रागभावादिसर्वाभावासम्भवात्, तथाच यावतां प्रागभावादीनां सम्बन्धाभावकूटकारणत्वानिर्वचनेऽन्योन्या-भावमादायातिप्रसङ्गः स्यादेवेति तदभिप्रेत्यैतदुक्तम्।

ननु भवेदप्येवं यद्यन्योन्याभावव्यावृत्तं सम्बन्धाभावत्वं वस्तु भवेदित्यत आह, 'अन्यथेति, अन्यथानुपपत्त्या त्वयापि तस्याभ्युपेय-त्वादिति भावः।

भावे कार्य्यव्याप्याभावापत्तौ कार्य्य-कारणव्याप्य-व्यापकभावे व्याघातात्। किञ्च तथापि प्रतिबन्धकाभावे शक्तिरस्तीति तत्सत्त्वे तदन्योऽन्याभावमादाय शक्तिसत्त्वप्रसङ्गः। न च स दुर्वचः, न वा प्रागभावादित्वे नाननुगम-व्यभिचारौ, प्रतियोग्यधिकरणयोः संसर्गमारोप्य यो निषेधः स संसर्गाभावः। भूतलं घटसंसर्गी नेत्यत्र भूतले घटसंसर्गस्य संसर्गो नारोप्यते किन्तु तादात्म्यम्। वयन्तु ब्रूमः यत्र प्रतियोगिनमधि-

---

ननु व्याप्ति-कारणतयोर्ग्रहेण नान्योन्याभावमादायातिप्रसङ्गो येनोभयाभ्युपगमः स्यात् तथा हि सामग्र्यभावे कार्य्याभाव इति कालगर्भं वाच्यम् तथाच व्यतिरेकत्वेनैव सामान्यतोऽन्वयादिग्रहः सम्भवत्येव यदा सामग्र्यन्योन्याभावस्तदा कार्य्यान्योन्याभावस्य सत्त्वात् व्याप्तौ तु यत्र वह्न्यभावः तत्र धूमाभाव इति संसर्गाभावपक्षेऽपि व्याप्तिशरीरप्रविष्टसंसर्गविशेषावच्छिन्नत्वस्यापि प्रसङ्गवारणायावश्यवाच्यत्वे तत एव निर्वाहेऽन्योन्याभावव्यावृत्तसंसर्गाभावाभ्युपगमस्य निर्वीजत्वात्स्वरसादवश्याभ्युपगन्तव्यत्वे बीजान्तरमाह, 'किञ्चेति। जल्पकथामाश्रित्योक्तमधुना वादकथामाश्रित्याह, 'न च स इति, 'प्रतियोगीति यत्र प्रतियोग्यधिकरणप्रतियोगिकसंसर्गविषयतया यस्यारोपत्वं तादृशारोपपूर्वकनिषेधावगमविषयत्वमित्यर्थः, यथाश्रुते तु प्रतियोगिन्यधिकरणसंसर्गमारोप्येत्यर्थः। ननु तादात्म्यमपि संसर्ग एवेत्यन्योन्याभावाव्याप्तिरित्यस्वरसादाह, 'वयन्त्विति, 'प्रतियोगिन-

करणे समारोप्य निषेधावगमः स संसर्गाभावः, यत्र चाधिकरणे प्रतियोगितावच्छेदकमारोप्य निषेधावगमः सोऽन्योन्याभावः। भूतलं न घट इत्यत्र भूतलस्य घटत्वावगमात् घटत्वमेव च घटतादात्म्यम्।

---

मिति प्रतियोगिन्यधिकरणसंसर्गमित्यर्थः, अन्यथा भूतले घटो नेत्यत्र भूतलस्य विशेषणतया घटस्य च तत्र विशेष्यतया समारोप्यत्वेनासम्भवापातात्। 'यत्र चेति, प्रतियोगितावच्छेदकस्यारोपः प्रकारतया द्रष्टव्यः न तु सम्बन्धतया सम्बन्धावच्छिन्नप्रतियोगिकसम्बन्धाभावेऽतिव्याप्तेः। न चासम्भवो घटो न पट इत्यादौ पटाभेदात्मनः पटत्वस्य सम्बन्धतयाऽऽरोप्यत्वात्त तु प्रकारतयेति वाच्यम्। तादात्म्यारोपेऽपि पटत्वादेरेव प्रकारत्वात्न न पटादेरिष्टत्वावच्छेदकाप्रकारतया अन्यादृशज्ञानस्याप्रवर्त्तकत्वात् इयानेव विशेषो यदेकत्र पटत्वादिसमवायेन प्रकारोऽपरत्र स्वाश्रयतादात्म्येनेति। यद्वा प्रतियोगितावच्छेदकत्वं यद्यवच्छिन्नत्तिधीजनकत्वं तदा संसर्गाभावे गतं, यदा तत्प्रतियोगिमात्रवृत्तित्वं तदा सम्बन्धाभावेऽतिप्रसङ्गेन यथाश्रुतमेवादरणीयं। अत्र वदन्ति तादृशारोपजन्यत्वमभावप्रतीतौ पाद्य-मनुगतधर्म्मावच्छेदेन तत्र तादृशविषयानुगमेनेति संसर्गाभावविषयत्वादि तदाच्यम् तथाच प्रतीतेर्विषयानुगमे किमनेन अननुगमे प्रतीतेरिदमपि दुर्घटं। किञ्च तत्पूर्वकत्वं तत्कारणकत्वं तत्र च नियमप्रविष्टयोरत्यन्ताभावान्योन्याभावयोरन्यतरस्य पूर्वत्वप्रविष्टप्रागभावस्य च स्वरूपे विचार्यमाणे संसर्गान्योन्याभावयोरन्यतरप्रतीत्य-

आरोपस्य हेतुत्वे किं मानमिति चेत्, मा भूत्तावदन्यत्, नेदमिह नेदमिदं इत्यबाधितविलक्षणव्यवहार एव तत्र मानमिति। ननु प्रतिबन्धकात्यन्ताभावो न हेतुः तस्मिन् सत्यपि कार्य्याभावात्। न हि करादौ

---

पेक्षायामुक्तलक्षणस्य कथं नान्योन्याश्रयत्वं प्रतीत्यभावाव्याप्तिश्च तत्रारोपपूर्वकप्रतीत्यभावात्। यत्तु आरोपपूर्वकमित्यत्रारोपस्याभावगर्भत्वेनान्योन्याश्रय इति, तन्न, प्रतियोगिमज्ज्ञानत्वेनैव जनकतया आरोपत्वस्याविवक्षणात्। न चाभावभ्रमविषयातिव्याप्तिः, तत्राप्यनुभावेनाभाववत्त्वभ्रमः किन्त्वभावशून्येऽभावभ्रम इत्यभावसामान्यलक्षणस्यातिव्याप्त्यभावात् आरोपस्याप्यभावत्वादिति। अत्र ब्रूमः। प्रतियोग्यारोपपूर्वकनिषेधधीविषयतावच्छेदकत्वं संसर्गाभावत्वं, एवमपेऽपीत्येतदुभयलक्षणं, स्वरूपन्तु यद्विषयतावच्छेदकं संसर्गाभावत्वादि तत्त्वाभावाभावत्वमत्त्वाभावाभावत्वञ्च तेन गोत्वसर्वपूर्वापकाशः। अस्ति च घटस्य योऽभावस्तद्भावो घटो घटान्योन्याभावस्याभावो घटत्वमिति। न च घटस्य योऽन्याभावस्तद्भावो न घटाभाव इति स्वसंसर्गाभावाभावोल्लक्षणार्थं इति पुनरन्योन्याश्रय इति, स्वाभावाभावत्वमित्यत्र वस्तुतो यद्यपि संसर्गाभाव एव पर्य्यवसितः तथापि संसर्गाभावत्वेन तत्र न प्रविष्टः अभावत्वेनैव स्वसंसर्गाभाव उपस्थित इति न काचिदनुपपत्तिः, अन्योन्याभावस्य स्वप्रतियोगिकाभावमात्राभावत्वादिति सर्वं सुस्थं। 'मा भूत्तावदिति, तथाप्यन्यदस्तीति उच्यते, तच्चारोप्याभावे तत्तद्भावबुद्धिवैजात्यानुपपत्तिरारोप्यसम्ब-

मण्यत्यन्ताभावः तत्संयोगात्यन्ताभावो वा, मणेः सावयववृत्तित्वात्[१] संयोगस्य चाव्याप्यवृत्तित्वात्। अतएव न तत्प्रागभाव-प्रध्वंसौ हेतू तयोः करादौ अवृत्तेः[२] गुण-कर्मादेश्च प्रतिबध्यत्वानापत्तेः तस्य जन्यधर्मानाश्रयत्वेन[३] तत्र तयोरभावात्[४]। न चान्यः संसर्गा-

---

भावच्छेदमन्तरेणाभावभेदाभावप्रसङ्गादित्यादि। 'नेदमि'ति, यदि भारोपः हेतुस्तदा भूतले घटसत्त्वेऽन्योन्याभावसत्त्वे कदाचिन्नेदमिह कदाचिन्नेदमिति प्रतीतौ वैलक्षण्यानुपपत्तेरित्यर्थः। अनुपलम्भादीनां कारणानां तौल्येन कार्यवैलक्षण्यकतापत्तेः कारणवैचित्र्यस्य कल्पनीयत्वेन पारिशेष्यादारोपहेतुतायामस्याकेरिति भावः। यथाश्रुते फलीभूतप्रत्ययस्य वैलक्षण्योपन्यासेऽस्यारोपकारणतायां प्रतीतिविधया मानमित्यसङ्गतोपन्यासापत्तेरित्यवधेयम्। 'गुणे'ति, गुणादेः

---

(१) ह्यवयववृत्तित्वात् करावयवावच्छिन्नवृत्तित्वात्, तथाच किञ्चिदवयवावच्छेदेन करादौ मणेः सत्त्वदशायामपि किञ्चिदवयवावच्छेदेन मण्यत्यन्ताभावसत्त्वात् दाहापत्तिरिति भावः।

(२) ध्वंस-प्रागभावयोः प्रतियोगिसमवायिदेशवृत्तित्वनियमेन मण्यादिप्रागभाव-ध्वंसयोर्न करादिवृत्तित्वमिति।

(३) यत्र जन्यत्वं नित्यान्यत्वं न तु प्रागभावप्रतियोगित्वं, नित्यत्वञ्च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं, तेन जन्यधर्मपदेन प्रागभावस्यापि संग्रह इति।

(४) ध्वंस-प्रागभावयोरभावादित्यर्थः।

भावोऽस्तीति चेत्। न। संसर्गावच्छिन्नप्रतियोगिकस्याभावविशेषस्य सति प्रतिबन्धकेऽभावात्। स च समयविशेषावच्छेदेन संसर्गितया अत्यन्ताभाव एव तथैवान्वय-व्यतिरेकावधारणात्। अथैवं प्रध्वंस-प्रागभावस्थले समयविशेषावच्छिन्नात्यन्ताभावेनैवोपपत्तौ न तयोः सिद्धिः[1] अत्यन्ताभावो ह्यव्याप्यवृत्तिः तस्य चैकत्र

---

प्रतिबध्यत्वं तदा यदि प्रतिबन्धकाभावाभावौ तत्र, न चाभावस्तत्रेति भावः। 'अभावविशेषस्येति तत्सम्बन्धावच्छिन्नप्रतियोगिकस्य प्रतियोगिविरुद्धस्य चेत्यर्थः, तथाच संयोगावच्छिन्नप्रतियोगिकतन्मध्यत्यन्ताभावो व्याप्यवृत्तिसंयोगात्यन्ताभावश्च हेतुरिति नोक्तदोष इति भावः। नन्वत्यन्ताभावस्य नित्यतया न कदाचित्कार्य्योत्पत्तिरित्यत आह, 'स चेति नित्यत्वेऽपि तदधिकरणस्वभावतया तस्य कादाचित्कत्वमित्यर्थः,। नन्वत्यन्ताभावस्य प्रतियोगिसादेश्यं[2] अवच्छेदकं विनानुपपन्नमित्यत्यन्ताभावावच्छेदकतयैव तौ सिद्धौतामित्यत आह, 'अत्यन्तेति, प्रागभावादिदृष्यवच्छेदककाल एव तदवच्छेदकोऽस्तु किं

---

(१) न तयोः सिद्धिरिति तयोः ध्वंस-प्रागभावयोः न सिद्धिरित्यर्थः, तथाच ध्वंस-प्रागभावोल्लेखिनी प्रतीतिः वास्तविकोयो ध्वंसाधिकरणकालः तदवच्छिन्नात्यन्ताभावं वास्तविको यः प्रागभावाधिकरणकालः तदवच्छिन्नात्यन्ताभावञ्चावगाहते न त्वतिरिक्तध्वंस-प्रागभावाविति भावः।

(२) प्रतियोगिसमानदेशत्वमित्यर्थः।

भावाभावे क्वचिद्देशोऽवच्छेदकः क्वचित्काल इति[१] चेत् । न । तत्र विद्यमानताविरोधित्वेनैव कपाले न घट इतिप्रतीतिवैलक्षण्यात्[२] न त्वेवं भूतले घटाभावप्रतीतिः[३] ।

अन्ये तु भविष्यति घटो नष्ट इति विलक्षणप्रतीत्योरत्यन्ताभावेनैकेन समर्थयितुमशक्यत्वात्[४] अन्यएवायं संसर्गाभावइत्यप्याहुः ।

एतेन विशेषणाभाव-विशेष्याभाव-तदुभयाभाव-घटितं सामग्रीत्रयमेवास्तु दाहे च जातित्रयकल्पन-

---

नाभ्यामन्तर्गताभ्यामिति भावः । 'अपौत्यक्षरत्वे तदीयमनुमान्यथा-सिद्धिरेवेति । विगीतत्वेनेति यद्यप्यनिषिद्धत्वं श्रुत्यनुमापकं

---

(१) तथाच कालघटितायां देशस्यावच्छेदकत्वं, देशघटितायां कालस्यावच्छेदकत्वमिति भावः ।

(२) ध्वंस-प्रागभावावगाहिप्रतीत्योः घटनिष्ठविद्यमानताविरोधित्वेन एकस्मिन् देशे घटाभावसत्त्वेऽपि देशान्तरे घटस्य विद्यमानत्वसम्भवात् अत्यन्ताभावावगाहिप्रतीतेः घटनिष्ठविद्यमानताविरोधित्वेन मिथो-वैलक्षण्यमिति भावः ।

(३) भूतले घटाभावप्रतीतिः न घटनिष्ठविद्यमानताविरोधिनीत्यर्थः ।

(४) विषयवैलक्षण्यस्य प्रतीतिवैलक्षण्यनियामकतया ध्वंस-प्रागभावावगाहिप्रतीत्योः अत्यन्ताभावविषयकत्वे वैलक्षण्यासम्भव इति भावः ।

मिति प्रत्युक्तम्। अनुगतहेतुसत्त्वात् दाहवैजात्यस्य योग्यानुपलम्भबाधितत्वाच्च व्यक्तियोग्यतयैव जातियोग्यत्वेन[1] योग्ये अयोग्यजात्यभावात्। ननु महरं मा दहेत्यादौ सावधिमन्त्रपाठे मन्त्रविनाशे दाहः स्यात्। न च सङ्कल्पविषयकालविशेष एव तत्र प्रतिबन्धकः, सङ्कल्पनाशे समयस्य स्वतोऽविशेषात्। न च उद्देश्यत्वमेव तत्र विशेषः, तस्य विनाशात्। न चोद्देश्यध्वंसोऽपि हेतुः, तस्य यामादूर्ध्वमपि सत्त्वात्। न च मन्त्रपाठजनितमदृष्टमेव तत्र प्रतिबन्धकम् तत्कालदाहाप्राप्तिकफलनाश्यत्वेन नाशे दाहप्रतिबन्ध इति वाच्यम्। प्रतिबन्धकमन्त्रपाठस्यानिषिद्धत्वेनाविहितत्वेन चादृष्टाजनकत्वात् तदाचारस्य विगीतत्वेन श्रुत्याद्यननुमापकत्वादिति मैवम्। उद्देश्यत्वज्ञानाहितसंस्कारविषयकालस्य प्रतिबन्धकत्वात्।

---

तादृशाविगीतत्वाभावो यद्यस्ति तदा श्रुतिनिषिद्धत्वादधर्मजनकमेव तदभावेऽविगीतत्वं श्रुत्यनुमापकमेवेत्युभयथापीदमुक्तं, तथापि शिष्टाप्रवृत्तिविषयत्वं विगीतत्वमभिप्रेत्य तदुक्तं। वस्तुतस्तु अलौकिकत्वात् तदनुमानमिदं तु लौकिकमेव मत्यादिवदित्यवधेयं।

---

(१) व्यक्तियोग्यतैव जातियोग्यत्वे मानमिति ख०।

नतु प्रतिबन्धमकुर्वतामप्रतिबन्धकत्वेन शक्तिमनपकुर्वतां मन्त्रादीनां न प्रतिबन्धकत्वं अतः शक्तिसिद्धिः। न च कार्य्यानुत्पाद एव प्रतिबन्धः तज्जनकत्वमेव प्रतिबन्धकत्वमिति वाच्यम्। कार्य्यानुत्पादो हि न तत्प्रागभावो न वा तदुत्तरकालसम्बन्धः तस्य मन्त्राद्यजन्यत्वादिति चेत्। न। मन्त्रादीनामप्रतिबन्धकत्वात् तत्प्रयोक्तारस्तु प्रतिबन्धकाः ते च किञ्चित्करा एव मन्त्रादौ च कार्य्ये कारणोपचारात् स्वार्थिककन्प्रत्ययाद्वा तथा व्यपदेशः, प्रतिबन्धश्च सामग्रीविरहः, मन्त्राद्यभावघटितसामग्रीविरहश्च मन्त्रादिरेव तदभावाभावस्य तत्त्वात्।

नव्यास्तु न प्रतिबन्धकाभावः कारणं न वा शक्तिः किन्तु तत्तत्कालीनदाहविशेषं प्रति तत्तत्कालप्रतिबन्धेतरवह्निः कारणत्वमिति प्रतिबन्धकाभावः कारणताव-

---

'मन्त्राद्यजन्यत्वादिति, यद्यपि योगवत्क्षेमस्यापि प्रतिबाध्यत्वं वक्ष्यतीति मन्त्रादिजन्यत्वमस्त्येव कार्य्यानुत्पादस्य तथापि मन्त्राद्यजन्यत्वादित्यस्य मन्त्राद्यकारणकत्वादित्यर्थः, भवति ह्यनुत्पादस्य मन्त्रादिजन्यत्वेऽपि मन्त्रादीनां तत्कारणता अनुत्पादपूर्वसमयासत्त्वात् प्रागभावं विना तदभावात् प्रतिकल्पकत्वस्य च प्रतिबन्धजनकत्वार्थकत्वादिति ध्येयं।

मिश्रमतमुपन्यस्यति, 'नव्यास्त्विति।

च्छेदको न तु कारणम् दण्डत्ववत्, आकाशादौ त्वेक-व्यक्तिकेन यथा कारणत्वं क्वचित्प्रतिबन्धेऽप्यन्यत्र शब्दोत्पत्तेः किन्तु भेर्य्यादेः तथा कारणत्वमिति तत्प्रतिबन्धेन शब्दोत्पत्तिरित्याहुः। तन्न, वह्नि-प्रतिबन्धकाभावयोरन्वय-व्यतिरेकतौल्येनोभयस्यापि कारणत्वात् न त्वेकमेवावच्छेदकं विनिगमकाभावात्। किञ्च यस्मिन्

---

'भेर्य्यादेरिति' अतद्गुणसंविज्ञानबहुव्रीहिणा भेर्य्याकाशसंयोगादिरभिमतोऽन्यथा तथैव भेर्य्यान्यदा तत्र तदान्यत्र वा शब्दानुत्पादनापत्तेः। इदञ्च समाधिसाम्यादुक्तं, यदा प्रतिबन्धकाभाव एव हेतुतावच्छेदकत्वेनोच्यते तदा सकलमविकलमेवात्यन्ताभावस्याव्याप्यवृत्तित्वादिति।

नन्वन्वय-व्यतिरेकतौल्येन चेदुभयजनकत्वं दण्डदृढत्वयोरुभयोरपि जनकतापत्तिः। अथ तत्र चक्रादिसमवधानं दण्डस्य साक्षात्सम्बन्धादिति दण्डमात्रजनकतायां विनिगमकमस्तीति वैधर्म्यमुच्यते तदेतद्वह्नि-प्रतिबन्धकाभावयोरपि तुल्यं। न च प्रतिबन्धकाभावस्य वह्निविरहकरादावपि सत्त्वात् साक्षात्समवधानमस्त्येवेति वाच्यम्। अधिकरणविशेषनियतप्रतिबन्धकविशेषस्य कारणान्तरे अभावसत्त्वेऽपि प्रतिबन्धेनाधिकरणविशेषविशेषितप्रतिबन्धकाभावकारणत्वस्य अवश्यवाच्यतया तादृशस्यास्य समवधानं परम्परासम्बन्धेनैवेत्यवश्याभ्युपगमात् तथाच दृढत्ववदिदमवच्छेदकं अस्त्वित्यरुचेराह, 'किञ्चेति, 'यस्मिन्निति, कार्य्यजनक इति शेषः, तेन फलोपधानवत्यां यस्यां

सत्यपि यदभावात्कार्याभावः तस्य कारणत्वमायाति न तु तदवच्छेदकत्वम्। न हि कार्यायोगव्यवच्छेदः कारणत्वं, किन्तु नियतपूर्वसत्त्वम्। तच्च सहकारिविरहप्रयुक्तकार्याभावेऽप्यक्षतम्। अन्यथा चक्रसहितदण्डत्वेन कारणत्वे सहकार्युच्छेदः। यस्य यद्धर्मभवगम्यैव नियतपूर्वसत्त्वमवगम्यते तस्य तदवच्छेदकं दण्डत्वमिव। सहकारी तु न तथा। ननु मा भूदर्था-

---

व्यक्तौ सत्यामपि यदभावात्कार्याभावः न तदवच्छेदकमित्यर्थः, अतीन्द्रियोपहितचक्रादेव प्रतिबन्धकत्वात्सत्त्वयोः सम्भवेनावच्छेदकत्वं दण्डदृढत्वसत्त्वासत्त्वैकस्येति घटोपहितदण्डदृढत्वाभाव एव नेति दृढत्वेनैवान्वयानुविधानमिति तदवच्छेदकमेवेति भावः। उक्त एव नियमे विपक्षबाधकमाह, 'न हीति, तथात्विकार्यार्थिनः कारणेऽप्रवृत्त्यापातादिति भावः। 'किन्त्विति इतरसत्त्वे कार्याभावनियमस्तदवच्छेदकमित्यर्थः, यथाश्रुते तु दृढदण्डत्वस्यानवच्छेदकत्वापाते व्याप्तिरूपनियमपक्षे दृढत्वस्य व्यर्थत्वादिति भावः। 'अन्यथेति कार्यायोगेत्यादेः कारणत्व इत्यर्थः, दृष्टापत्त्यावसरव्यापत्तिरुक्तैवेति मन्तव्यं। नन्वेवं दण्डत्वमपि सहकार्येवास्तु नावच्छेदकमित्यत आह, 'यस्येति यदि दण्डत्वापक्षे दण्डहेतुतापक्षस्तदा तथा प्रतीतापि न चैवं, किन्तु तदादायात्यवश्यं तदवच्छेदकमित्यर्थः। न चैवं दृढत्वं नावच्छेदकं स्यादिति वाच्यम्। चक्रभ्रमिद्वारा ह्यनुविधानं दण्ड-

पत्तिः शक्तौ मानमनुमानन्तु स्यात् तथा हि स्थिरोऽवयवी जनकदशाविशिष्टो वह्निरजनकदशाव्यावृत्त-भावभूतधर्मवान्[१] जनकत्वात् कुण्ठकुठारात्तीक्ष्ण-कुठारवत् दाह्यासंयुक्तवह्नेः दाह्यसंयुक्तवह्निवच्च प्रति-बन्धकसत्त्वे संयोगादेरजनकदशावर्त्तित्वेन तदतिरिक्ता-तीन्द्रियभावभूतधर्मसिद्धिः। यद्यपि शक्तेर्भावहेतु-जन्यत्वेन नाजनकदशाव्यावृत्तत्वं तथाप्युद्भवविशिष्टा-यास्तथात्वम्। यद्वा धर्मेऽतीन्द्रियत्वं विशेषणम्। न च दृष्टान्तासिद्धिः, तुल्याधारत्वेऽपि लोहविशेषघटित-

स्येति तादृशदण्डस्यैव नियतपूर्ववर्त्तितायच इति तदवच्छेदकमतएव न वैपरीत्यं विवक्षितविवेकेन चक्रभ्रमिजनकत्वस्यैव दार्व्यतया घटकत्वस्याजनकत्वात्। न चैवमन्यं प्रतीति न्यायेन दण्डस्यान्यथा-सिद्धतापत्तिः, अन्यमुदासीनमित्यर्थस्य वक्ष्यमाणत्वादिति दिक्। 'स्थिरोऽवयवीति मण्यादिसमवधानमात्राधीनाजनकत्वाथवच्छिन्नकाले मण्याद्यसमवहितो वह्निरित्यर्थः, तादृशविशेषणस्थैर्यस्य प्रत्यक्षगम्य-त्वार्थमेव स्थिरोऽवयवीत्युक्तं, अवयवी योग्य इति यावत्, अन्यथा वह्नित्वस्य परमाणाववृत्त्या अवयवीति व्यर्थं स्यादिति भावः।

ननु यावज्जनकदशाव्यावृत्तत्वं न मण्याद्यभावादिनियतकिञ्चिद्व्या-वृत्तत्वं संयोगस्यापीत्यस्वरसादाह, 'यद्वेति, न चैवं भावभूतपदं व्यर्थं, अभावस्यानुपलब्धिगम्यत्वेन भट्टनये तस्याप्यतीन्द्रियतया तदुपादानात्

(१) अजनकदशाव्यावर्त्तकभावभूतधर्मवानिति ख०।

कुठारे विलक्षणच्छिदाकार्य्यबलादतीन्द्रियतीक्ष्णत्वसिद्धेः। अथवा तथाभूत एव वह्निः कार्य्यानुकूलातीन्द्रियादृष्टधर्म्मसमवायी जनकत्वात् आत्मवत्, अतीन्द्रियत्वञ्च यद्यपि न साक्षात्काराविषयत्वं अनित्यसाक्षात्काराविषयत्वं योगजधर्म्माद्यजन्यसाक्षात्काराविषयत्वं वा, परत्वं वा प्रत्यसिद्धेः संयोगादिपञ्चकजन्यज्ञानाविषयत्वमैन्द्रियकाणामपि, तथापि संयोगाद्यन्यतरप्रत्यासत्तिजन्यसाक्षात्काराविषयत्वमुभयवादि-

गुह्णयेऽपि दुरदृष्टाभावादेरतीन्द्रियस्य धारणायोपादानमिति भावः। 'कार्य्येति कार्य्यानुकूलत्वाद्रूपसिद्धये, अतएव कार्य्यपदं स्वकार्य्यपरमत एव च हेतौ जनकत्वमपि तज्जनकत्वमन्यथा व्यभिचारापातादिति, अतएव चायेऽर्थान्तरमङ्गा दाहे कार्य्ये-मद्भावात्, धर्म्मिष्टपदमदृष्टवदात्मसंयोगेनातीन्द्रियपरमुष्णस्पर्शेऽर्थान्तरवारणाय समवायपदमप्युक्तमेव मध्याद्यभाववारणायेति भावः।

ननु हेत्वादिरन्यतरासिद्धेऽपि प्रमाध्याङ्गत्वात् न साध्यमपि तथा तत्प्रतिबन्धकार्थमेवोक्तप्रयासेन अन्यस्यापि तत्साधकस्यासिद्धसाधकतया मतान्तरनुष्टभादिषूभयसिद्धमतीन्द्रियत्वं निर्वक्तुमशक्यं अन्यतरासिद्धा केषाञ्चिदपि दूषयति, 'परत्वमिति, मुख्येसेव पञ्चमनीयत्वेनाद्यदयं न स्यादिति शेषं न परत्वतीत्यर्थः, 'तथापीति, यद्यपि संयोगादिजन्यज्ञानपञ्चकविषयकत्वमनुगतमस्त्येव तथापि कूटादेघ-घैकाभावस्य लघुत्वात् तद्धर्म्ममेव साध्यमुक्तं। 'उभयेति, यद्यप्येतदुभय-

सिद्धम्, अन्यतरत्वञ्च तदन्यान्यत्वम्। न चाभावा-

---

मतमुक्तं उभयेति यद्यप्येवमुभयमतप्रसिद्धावन्यतरसिद्धव्यर्थविशेषणता
तथापि साध्ये व्यर्थविशेषणतार्थान्तरं हेतुव्यर्थविशेषणताधिकत्वमिति
प्राचीनमतेन प्रयोगात्। वस्तुतस्तु साध्ये व्यर्थविशेषणता न दोषः
हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य गुरु-
ण्यप्यवच्छेदके सुग्रहत्वादधिकरणगौरवस्यादोषत्वात् लघाविव गुरु-
ण्यप्यधिकरणे तस्यां सामग्र्यामभावग्रहादन्यथा तथाभूतावच्छेदकत्वा-
भावेऽगृहीते विशेषणे तथाभूतावच्छेदकत्वग्रहे व्यभिचारित्वापत्तेः
हेतौ तु नीलधूमत्वादि नाधिकरणकोटौ किन्तु अवच्छेदककोटा-
विति व्यर्थविशेषणता भवत्येव। न च बीजसाम्यादुभयमपि दोष-
इत्यनेन विरोधः, अन्योन्याभावगर्भव्याप्तेरेव गमकतेति मताव-
ष्टम्भेन तदभिधानात् तत्र हि साध्यवतोऽन्योन्याभावप्रतियोगितया
साध्यस्यावच्छेदककोटिप्रवेशादुभयगर्भैव व्याप्तिरनुमितिहेतुरित्युक्त-
मेवेत्यन्यत्र प्रलयानुमानादौ सुव्यक्तं सर्वमिति। नन्वन्यतरत्वं प्रत्येक-
मात्रनिष्ठमित्यत आह, 'अन्यतरत्वमिति, तदन्यान्यत्वञ्च संयोगत्वा-
द्यवच्छिन्नजनकतानाश्रयत्वं, यथाश्रुते संयुक्तसमवायादौ समवाय-
गर्भतया संयोग-समवायान्यान्यत्वेन पक्षग्रहणं विरुध्येत। किञ्च पूर्व-
वदुभयमतसाधारण्यानुपपत्तिरात्ममनोयोगस्य योगिप्रत्यक्षादावपि
जनकत्वात् संयोगत्वादि च विषयविशेषसंयोगत्वादि वक्तव्यं अन्यथा-
त्ममनःसंयोगस्यापि संयोगत्वेन जनकतयोक्तविरोधापत्तिः। न च
विषयपर्यन्तविशेषणे संयोगत्वस्य विशेषत्वपर्यन्तविवक्षा न युक्तेति

तीन्द्रियत्वं, तस्यासिद्धेः। न च वह्नौ स्थितिस्थापकेनार्थान्तरं, तत्र तदभावात् क्रियाया वेगेनादृष्टवदात्मसंयोगेन वोत्पत्तेः न चात्मत्वं नित्यत्वं वोपाधिः। स्पर्शैकत्वादिमति द्व्यणुके साध्याव्यापकत्वात्। यद्वा पिण्डीभूतो वह्निः दाहानुकूलादिष्टातीन्द्रियभावभूतधर्मवान् दाहजनकत्वादात्मवत्, न चात्मत्वमुपाधिः, अदृष्टत्वस्य

---

साध्यम्। मनोयोगेश्वरयोगिप्रत्यक्षस्य संयोगजन्यतया मनसोऽतीन्द्रियत्वानुपपत्तेरिति भावः। 'तस्येति गुरुत्वसाक्षात्काराविषयत्वस्येत्यर्थः, तस्याधिकरणरूपतया संयोगादिमत्त्वात्स्यैव सत्त्वादिति भावः। यद्वा 'तस्येत्यनन्तरमतिरिक्तस्येति शेषः, तथा च पूर्ववदेव संयोगादिपाद्यत्वमिति भावः।

केचिदभावातीन्द्रियत्वमित्यनन्तरं दोष इति पदमध्याहरन्ति, तेनाभावातीन्द्रियत्वेऽपि न कापि क्षतिरित्यर्थः, 'तस्यासिद्धेः' अतीन्द्रियत्वलक्षणासिद्धेः, अपि तु प्रकृते अतीन्द्रियपदेनेदं विवक्षितं तेनाभावातीन्द्रियदाहसमवायपदं साध्ये देयम् अन्यथा स्वमतेन भट्टनयेऽभावातीन्द्रियत्वेऽपि न्यायनये तथात्वाभावेन तद्दाहकसमवायपदगर्भसाध्यमन्यतरासिद्धं स्यादिति वदन्ति।

ननु यदि कार्यसामान्यगर्भं साध्यं तदा स्थितिस्थापकेनार्थान्तराप्रसङ्गः दाहत्वविशेषकार्यगर्भं तच्चद्धापि नेति तथैवानुमानमाह, 'यद्वेति अदृष्टत्वस्य धर्मत्वादेरित्यर्थः, न चादिपदेनैव तदाक्षित-

दाहानुकूलत्वेनादृष्टे साध्याव्यापकत्वात्। अथवा कर-वह्निसंयोगः कार्य्यानुकूलातीन्द्रियधर्म्मसमवायी जनकत्वादात्मवत् द्व्यणुकवच्च। न चात्मत्वं द्रव्यत्वं वोपाधिः, द्व्यणुकैकात्व-स्पर्शादौ साध्याव्यापकत्वात्। यद्वा प्रतिबन्धकदशायां प्रत्यक्षसकलदाहहेतुसमवहितो दाहाजनको वह्निः जनकदशावृत्तिकार्य्यानुकूलभावभूतधर्म्म-शून्योऽजनकत्वात् कुण्ठकुठारवत्। यद्वा तथाभूतो वह्निर्दाहजनकदशावृत्तिदाहानुकूलभावभूतधर्म्मशून्यः

---

मिति वाच्यम्। अदिष्टपदस्याव्यासज्यवृत्तित्वात्मकत्वात्। न चादृष्टत्वाभावेन कार्य्यत्वाभावाभावाच्च तदनुकूलमिति वाच्यम्। अदृष्टस्य तद्व्याप्यतया स्वस्वव्याप्येतरसमवधाने कार्य्याभावव्यापकाभावप्रतियोगित्वलक्षणकार्य्याभावप्रयोजकाभावप्रतियोगित्वरूपानुकूलत्ववत्त्वसत्त्वादिति भावः। 'कार्य्यानुकूलेति स्वकार्य्यानुकूलेत्यर्थः। 'न चात्मत्व-मिति, दाहजनकत्वरूपपक्षधर्मतावच्छिन्नसाध्यव्यापकमिति शेषः। शुद्धसाध्यव्यापकमाह, 'द्रव्यत्वमिति, 'द्व्यणुकेति। न च तन्निष्ठस्यैकत्वादेरनुकूलस्यातीन्द्रियत्वाभावात् तत्र साध्यमेव नास्ति कथमेतदिति वाच्यम्। धर्मांशस्याविवक्षितत्वेन तत्समवायित्वस्य च तन्निरूपसमवायाश्रयत्वात्मकतया समवायिद्व्यणुकमादायैव तत्र साध्यसत्त्वादिति भावः। नन्वनुकूलत्वं यद्यवच्छेदकत्वं तदा दृष्टान्तासिद्धिरथ जनकत्वं तदा शक्तौ तथाभ्युपगमेऽपसिद्धान्त इत्युभयसाधारणं तदाह,

दाहाजनकत्वात् दाह्यासंयुक्तवह्निवत्। अनुकूलतर्कश्च कार्य्याभावप्रयोजकाभावप्रतियोगित्वं कारण-तदवच्छेदकसाधारणं, दृढ़दण्डत्वेन कारणत्वे दृढ़त्वाभावादपि कार्य्याभावदर्शनादिति। उच्यते। साध्यं विनापि उभयसिद्धप्रतिबन्धकाभावादेव जनकत्वादिहेतुसम्भवात् विपक्षबाधकाभावेनानुमानानामप्रयोजकत्वम्। यदि च सहचारदर्शन-व्यभिचारादर्शनोपाध्यनुपलम्भाभावादेव व्याप्तिग्रहः तदा शक्तिसिद्ध्यनन्तरं तेनैव हेतुना साध्ये शक्त्यतिरिक्तत्वप्रक्षेपेण शक्त्यतिरिक्तदाहानुकूलातीन्द्रियधर्म्मसिद्धिः। एवं तदतिरिक्तप्रक्षेपात्तेनैव हेतुनानन्तताहशधर्म्मसिद्धिप्रसङ्गः द्वितीयादितादृशधर्म्मसिद्धिं विनापि प्रथमानुमितशक्त्यैव जनकत्वाद्युपपत्तेर्न तादृशानन्तधर्म्मसिद्धिरिति चेत्, हन्तैवं शक्तिं विनापि तदर्थसिद्धेः किं शक्त्या। यद्वि ईश्वरानन्त्यवत् न शक्त्यानन्त्यमित्युक्तम्, तदबोधात् कार्य्यमात्रे हि कर्तृत्वेन कारणत्वं न त्वीश्वरत्वेन

---

'अनुकूलश्चेति यथाचैतत् तथोक्तं। नन्वनुकूलतर्को न प्रयोजकः प्रतिकूलतर्काभावस्तु प्रयोजक एव तथाचानन्तताद्‌ृशस्वीकार एव प्रतिकूल इति भवाद्दोभाग्य शक्तिश्च सिध्यत्येवेत्यरुचेर्दोषान्तरमाह,

द्विकल्पकत्वादिना वा गौरवात्, घटे त्वार्थः समाजः।
एवमजनकदशाव्यावृत्तत्वेनैव प्रयोजकत्वं, न तु भावभू-
तत्वेनेति गौरवात्। अपि च भावकार्य्यमात्रस्य सम-
वायिकारणजन्यत्वेन शक्तेरपि तथात्वात् शक्त्यनुकूला
शक्तिरपरा समवायिकारणे मन्तव्या। एवं सापि सम-
वायिकारणजन्येति तदनुकूलशक्तिस्वीकारे शक्त्यन-
वस्था। किञ्च प्रथमानुमानेऽजनकत्वं न स्वरूपायोग्य-

---

'अपि चेति, यद्यपि निमित्तकारणे शक्तिरस्त्वेवेत्यनवस्था तथाप्ये-
काधिकरणकालान्तराशक्तिरूपानिष्टप्रसङ्गनाय समवायिकारणप-
र्य्यन्तगवेषणं। यद्यपि प्रामाणिकतयैवमनवस्थोद्धर्तुं शक्यत एव तथा-
प्यवच्छेदकीभूतशक्त्यनुत्पन्नायां कार्य्यशक्तिरुत्पद्यत एवेति प्राक्
प्राक्शक्तिमत्त्वे उत्तरोत्तरशक्तिसिद्धिरिति मूलभूतप्रथमानुत्पत्तौ
नैकापि स्यान्न वा सहजापि स्यादिति मन्तव्यं। एतच्च कार्य्यशक्तिपक्षे,
यदि च नित्यैव शक्तिस्तदा प्रतिबन्धकवह्नेरपि दाहापत्तिः। न
चोद्भूता सा तदा नेति वाच्यम्। उद्भूतत्वमपि नित्यं यदि तदेव
शक्तित्वेऽभिषिच्यतां किमन्तर्गडुना नित्यशक्त्येति ध्येयम्। ननु
भावमात्रकार्य्यस्य समवायिकारणजन्यत्वं न परोमन्यते समवायस्य
भावकार्य्यस्यापि तथाभावादित्युक्तयुक्तेः स्वसाध्यादिकत्वेनाद्युपपदात्,
'किञ्चेति, यद्यपि द्वितीयत्ने मानसाधारणमिदं दूषणं तथाप्यजन-
कत्वगर्भ-तदगर्भाभ्यां कोटिद्वयं विभज्य प्रथमानुमानपदं प्रथमकोट्य-

त्वम् वह्नौ कुठारे च तदभावात्, किन्तु कार्यानुपधानम्, तथाच तदनुपधानदशायामपि वह्नौ शक्तिः कुठारे तैक्ष्ण्यमिति बाधो दृष्टान्तासिद्धिश्च लौहविशेषाणामेव सातिशयच्छिदाजनकत्वमिति नातीन्द्रियतैक्ष्ण्यसिद्धिः। अग्रिमचतुष्के बहिरिन्द्रियाप्रत्यक्षत्वमुपाधिः तुल्ययोगक्षेमत्वेऽपि सन्दिग्धोपाधित्वेन दूषक-

---

नुमानपरत्वेनोभयपरं द्रष्टव्यं। यद्वा बाधात् तत्र स्फुट एव दोषः किमन्येनेति तदपहारेणेदं प्रथमपदं। यद्यपि चोद्भूतत्वविशिष्टाशक्तिरजनकद्रव्याव्यावृत्तेरिति पूर्वपक्षे कण्टकोद्धारः स्फुट एवास्ति तथापि मिथोनियामकत्वेन पूर्वोक्तेनोद्भूतत्वे मानाभाव इत्यवष्टम्भेन इदमुक्तमिति भावः। अतीन्द्रियगर्भे साध्ये बाधोद्धारं प्रागुक्तं दूषयति, 'लौहेति। ननु जातिविशेषोऽपि स्फुट इति कार्यविशेषव्यङ्ग्यतया कार्यविशेषोन्नेयत्वात् शक्तेरकल्प्य एव स इति विनिगमकाभावः यतस्तद्दोषमुपेक्ष्य तदनुमानमपीमं, प्रथमाग्रिमचतुष्के दोषान्तरमाह, 'अग्रिमेति, अत्र प्रथमद्वये चरमे च कार्यपदं साध्यस्थं यदि वह्निकार्यपरं तदा क्षितिस्थापकवति पार्थिवे साध्यासत्त्वेन साध्यव्यापकत्वमसौव्यन्नेनापार्थिवपक्षधर्मावच्छिन्नसाध्यव्यापकत्वाभिसन्धानेन वा चतुर्ष्वप्युक्तं, अन्यथा शाखादौ यथाश्रुते साध्याव्यापकत्वस्य तत्र विप्लवापत्तेरित्यवधेयम्। ननु प्रयोजकत्वेनैव तुल्ययोगक्षेमत्वमन्यथा तर्कसत्त्वे सोपाधिसन्देहानवकाशादित्यप्रयोजकत्वस्य प्राक्प्रभृतोऽप्युद्भावनेनार्थाधिक्यपुनरुक्तमिति तदित्यनुष्यन्

त्वात्। अपि च जनकत्वस्य केवलान्वयित्वेन व्यतिरेकाप्रसिद्धा नान्वय-व्यतिरेकौ। न च जनकत्वाभावस्य शक्ताचैव प्रसिद्धिः, अन्योन्याश्रयात्। न च गुरुवचनपरम्परात एव वाक्यार्थतया तत्सिद्धिः, त्वन्नये सिद्धार्थस्याप्रमाणत्वात्। न च परार्द्धसङ्ख्यायां साध्यजनकत्व-व्यतिरेकयोःप्रसिद्धिः, अप्रत्यक्षायाः शब्दैकवेद्यायाः तस्याः प्रत्यक्षेण साध्य-हेतुव्यतिरेकयोर्ग्रहीतुमशक्यत्वात्। एतेन

---

दोषान्तरमाह, 'अपि चेति, 'अप्रत्यक्षाया इति। न चाप्रत्यक्षतया प्रत्यक्षतोऽन्वयादिर्मा ग्रह्यतां मानान्तरेणैव ग्रह्यतामिति वाच्यम्। मानान्तरं हि न शब्दः सिद्धार्थानुमानमपि शक्तिग्राहकानुमानस्य जनकत्वाभाव एव पर्य्यवसानात्। न हि जनकत्वाभावमन्तरेण कार्य्यानुकूलातीन्द्रियाभावानुमानं, जनकत्वसत्त्वे तस्यावश्यकत्वात्। न च तदनुमानं साध्य-साधनाभावव्याप्तिग्रहमन्तरेण। न च तद्ग्रहस्तदुभयव्यतिरेकप्रसिद्धिं विना, तदुभयाभावस्य साध्य-साधन एवेति साध्यसाधनव्याप्तिग्रहे तदभावव्याप्तिधीः तस्यां च सत्यां तदुभयव्याप्तिधीरन्योन्याश्रय इति भावः। एतेन जनकत्वाभाव आकाशपरिमाणादौ प्रसिद्ध इति यत् केनाप्युक्तं तदपि प्रत्युक्तम्। न हि तद्विरहः क्वापि प्रत्यक्षे, तस्य स्वप्रत्यक्षाजनकत्वनियमादित्यतीन्द्रिय एव वाच्यः तत्रैवमेवान्योन्याश्रयसत्त्वादिति। 'एतेन परार्द्धेति, न च परार्द्धसङ्ख्यापण्डापूर्वयोः स्वध्वंसजनकत्वादेव नाजनकत्वमिति वाच्यम्। तन्मते ध्वंसस्याधिकरणादिरूपतया तेषां तदनन्यत्वादिति भावः।

यच्छापूर्वेऽपि तत्सिद्धिरपास्ता। स्यादेतत् तृणारणि-
मणीनां वह्नौ कारणत्वादेकशक्तिमत्त्वमुपेयम् एकजा-
तीयकार्ये एकजातीयकारणत्वनियमात्। वह्न्यवान्तर-
जातीये तेषां प्रत्येकं कारणत्वमिति चेत्। न।
वह्निजातीयस्याकस्मिकतापत्तेः कारणगतैकरूपमपहाय
कार्य्यगतबहुतररूपकल्पने गौरवात्। तृणारणि-
मणिप्रभववह्निषु अवान्तरजातेरनुपलम्भबाधितत्वाच्च।
यत्र च तत्तदिन्धनप्रयोज्यं प्रदीप-दारुदहनादौ वैजा-
त्यमनुभूयते तत्र कारणेष्वेकशक्तिमत्त्वमपि नास्ति।

---

ननु मा भूत् केवलान्वयितयोक्तानुमानेन शक्तिसाधनं किन्तु तृणादित्वावच्छेदकत्वेन शक्तिसिद्ध्यनन्तरं वह्निनिष्ठकार्यतादिकारणतावच्छेदको धर्मः शक्तिः कारणतावच्छेदकत्वात् तृणनिष्ठतादृशधर्मवदित्यनुमानात् शक्तिः सिद्ध्येदित्यभिसन्धिना तृणादिशक्तिं साधयति, 'स्यादेतदिति। ननु तृणादिनिष्ठैका शक्तिस्तदा यदि सा नित्या अनित्यत्वे गौरववैपरीत्यं नित्यता च न सम्भवत्येव प्रागुक्तवदित्यस्वरसादाह, 'तृणेति, तथाच प्रतिव्यक्तिशक्तिस्वीकारेऽपि न दोषः प्रामाणिकत्वाद्गौरवस्येति भावः।

ननु कार्य्यवैजात्यमेकत्र कारणभेदेन क्लृप्तमित्यत आह, 'प्रदीपेति, तत्रानुपलम्भबाध एव नास्तीति भावः। ननु

किञ्च गोमय-वृश्चिकप्रभववृश्चिकादिषु वैजात्यकल्पने तत्प्रभववृश्चिकेष्वपि वैजात्यं कल्प्यमेवं तत्प्रभव-तत्प्रभवेष्वपीति वैजात्यानन्त्यं विजातीयकारणानां विजातीयकार्यजनकत्वनियमात्। न च तयोर्नैकोवृश्चिकः, बुद्धिव्यपदेशयोरविशेषात्। यदि विजातीयेष्वेककार्य्ये-शक्तिसमवायान्न कार्य्यविशेषात्कारणविशेषः तद्भावा-त्तद्भावः क्वाप्यनुमीयेत, तदभावेऽपि तज्जातीय-शक्तिमतोऽन्यस्मादपि तदुत्पत्तिसम्भवादिति चेत्, वह्नि-वृश्चिकादावेवमेतत्। निरूपितनियतवह्न्यादिकारणक-धूमादौ कुतो न तदनुमानम्। अन्यथा कार्य्यवैजात्ये-ऽपि तृणस्य वह्निविशेष इव वह्नित्वेन धूमविशेष एव कारणत्वं न तु धूममात्रे। तृणादिप्रभवत्वग्रहानन्तरं वह्न्यवान्तरजातेर्ग्रहवद्वह्नि-तदन्यजन्यत्वग्रानानन्तरं धू-मावान्तरजातिग्रहो भविष्यतीत्यप्याशङ्क्येत। बाधकं विना धूमत्वेन वह्निकार्य्यतेति चेत्, तर्हि बाधकं विना धूमं प्रति वह्नित्वेन कारणतेत्यपि तुल्यम्।

यत्तु तृणत्वेन कारणत्वग्रहस्योपजीव्यत्वात्तद्रक्षार्थं वह्नौ जातिविशेष एव कल्प्यत इति, तन्न, वह्नित्वेन कार्य्यत्वग्रहात्तद्रक्षार्थं तृणादौ शक्तिकल्पनौचित्यात्।

---

कारणवह्नौव जातिः कार्य्ये इत्यत्रचेदोपान्तरमाह, 'किञ्चेति।

यथा चान्वय-व्यतिरेकाभ्यां तृण-फुत्कारयोः परस्पर-सहकारित्वं तथैव तच्छक्त्योरपि परस्परसहकारित्वेन वह्न्यनुकूलत्वं तथैव कार्य्यदर्शनात्। एवं तृणारणि-मणि-फूत्कार-निर्मन्थन-तरणिकिरणानां वह्न्यनुकूल-शक्तिमत्त्वेन कारणत्वेऽपि फूत्कारेण तृणादेव निर्मन्थनेनारणेरेव प्रतिफलिततरणिकिरणैर्मणेरेवाग्न्युत्पत्तिर्न तु मणि-फूत्कारादिभ्यः, मणि-फूत्कारशक्त्योः परस्पर-सहकारित्वविरहात्।

यत्तु तृण-फूत्कारादिस्तोमचये विशिष्टे शक्तिरिति, तन्न, तृणत्वेन गृहीतकारणताभङ्गप्रसङ्गादिति उच्यते, तृणारणि-मणि-फूत्कारादिव्यक्तीनामानन्त्येन प्रतिव्य-

---

'तथैव तच्छक्त्योरपीति। नन्वेककार्य्यकारणतावच्छेदकावच्छिन्नानां परस्परसमवलनं कार्य्यजनने तन्त्रं तथाच शक्तित्वावच्छिन्नं प्रति कार्य्यजनकतावच्छेदिका या शक्तिस्तदवच्छिन्नसमवलनं तृण-फूत्कार-तृणारण्येव परिणमति नैवं सहकारिनियमः स हि फलविरोधेन निर्वहति स च कार्य्यतावच्छेदकभेद इति सहकारिनियमादेव कार्य्यवैजात्यं। नन्वेकशक्तिमत्त्वं जनकत्वेति, नैवं, तृणादीनां शक्तित्वावच्छिन्नं प्रत्येकशक्तिमत्त्वेन फूत्कारादीनां तृणजन्यशक्तित्वाद्यवच्छिन्नं प्रति जनकत्वेनैव शक्तिसिद्धि-सहकारिनियमयोर्द्वयोरुपपत्तेरिति भावः।

एकदेशिमतं निरस्यति, 'यत्त्विति, 'प्रतिव्यक्तीति। ननु नियता-

क्तिभावहेतुजनितानन्तशक्तिस्वीकारे गौरवम् तावद्-नन्तव्यक्तिजन्यानन्तवह्निव्यक्तिषु जातिकल्पने लाघवमिति तदेव कल्पते। न च जातौ योग्यानुपलब्धिबाधः, गोमय-वृश्चिकप्रभववृश्चिकयोरीयन्नीलत्व-कपिलत्वव्यङ्ग्यवैजात्यस्य प्रत्यक्षसिद्धत्वात्। तृणजन्यनानावह्निव्यक्तिषु तृणजन्यत्वज्ञानानन्तरं मणिजन्यव्यावृत्तानुगतबुद्धिरस्ति जातिविषया। तृणजन्यत्वेनोपाधिना सेति चेत्। न। बाधकं विनानुगतबुद्धेस्तद्व्यङ्ग्यजातिविषयत्वनियमात्।

---

पक्षे न गौरवमिदमिति निरुक्तेव शास्तु। न च प्रतिबन्धेऽपि तृणाद्युद्धापत्त्याऽनित्यत्वं वाच्यमिति वाच्यम्। तृणकारणतामुपजीव्य प्रतिबन्धकल्पनेत्युपजीव्यप्रथमक्लृप्तनित्यशक्तौ सत्यामपि प्रतिबन्धे फलादर्शनेन तद्गतोद्भूतत्वादिकल्पनात्। न ह्युत्तरकालीनोपजीवकानित्यधर्मान्तरकल्पनयैवान्यथासिद्धिरुपजीव्यां प्रथमक्लृप्तां शक्तिमपवदतीति। मैवम्। शक्त्युपजीव्या प्रतिबन्धककल्पने न तन्नित्यत्वमपि, तत्कल्पनां विनापि प्रतिबन्धादिकल्पनादिति भावः। 'जातीति, न च कारण एवैका जातिः कल्प्यतामिति वाच्यम्। भिन्नत्वादिना सङ्करप्रसङ्गात् इति भावः। उक्तयुक्त्या प्रमाणान्तरबलादेवातिरिक्तजातिसिद्धौ तदवच्छेदकत्वकल्पनात् तद्-वृत्तौ च मणिजन्यव्यावृत्तफूत्कारजन्यत्वलक्षणानुगतबुद्धिरित्यर्थः, 'बाधकमिति, फूत्कारस्य वह्नित्वावच्छिन्नं प्रत्येव जनकत्वे प्रागुक्त-

न च गोमय-वृश्चिकप्रभववृश्चिकपरम्परायामननुगतजात्यापत्तिः, गोमयजन्यवृश्चिकप्रभववृश्चिकेषु वृश्चिकप्रभवत्वजातेः सत्त्वात्। वह्निमात्रे च दाह्यस्पर्शवानवयवस्तत्संयोगः सेवनादिश्च कारणानि। न च तृणादिकं विनापि तदुत्पत्तिप्रसङ्गः, विशेषसामग्रीमादा-

---

युक्त्या मणिसमवधानेऽपि कार्य्यापत्तिः तृणजन्यत्वेन जनकत्वे गौरवमेवेति फूत्कारजन्यतायाहकमेव लाघवसहकृतमवान्तरजातिं कल्पयति सैव फूत्कारजन्यतावच्छेदिका तृणजन्यतावच्छेदकत्वेन सूत्रानुगतधीकारणं न तूक्तोपाधेरुक्तलाघवेन जातेरावश्यकतया उपाधेस्तत्प्रतीतावतन्त्रत्वादिति भावः। एतेनेदमपि निरस्तं कार्य्यतावच्छेदकाननुगमप्रयुक्तदोषतया तत्तद्वह्नित्वमेवावच्छेदकमस्तु किमनुगमेनोपाधिना जात्या वेति लाघवबलादेव बाधकाभावेन कार्य्यान्तरजातिसत्त्वाच्च। अतएव तत्तद्व्यक्त्यंशादौ कार्य्येऽनुगतधर्मवाच्यादिनाऽजन्ये तत्तद्वह्नित्वमेवावच्छेदकमिति सिद्धान्तस्तथावान्तरजातिर्भवति। तदयं संक्षिप्तविभागो यत्र जातिः प्रमिता यत्र वा लाघवेन कल्प्यमानायां बाधकाभावस्तत्रोभयथावान्तरजातिरवच्छेदिका अन्यथाननुगतो धर्म इत्यवधेयं। 'गोमयजन्येति, कार्य्यवैजात्येन विजातीयकारणकल्पनं न तु कारणवैजात्येन विजातीयकार्य्यकल्पनमिति भावः। न हि वह्निमात्रस्यैकजातिकत्वं, प्रागुक्तं तदुद्धरति, 'वह्निमात्र इति, तृणकूपादौ प्रसिद्धं तदभावस्य मणिजन्ये सम्भव इति तदवच्छेदेन मणिजन्यत्वं ग्राह्यमिति हेत्वन्तरमाह,

यैव सामान्यसामग्र्या जनकत्वात्। ननु तृणारणि-मणीनां वह्नौ कारणत्वग्रहे शक्ति-वैजात्ययोरन्यतर-कल्पनं तद्ग्रहश्च नान्वय-व्यतिरेकाभ्यां व्यभिचारात्। अथारणि-मण्यभाववति स्तोमविशेषे तृणं विना वह्नि-व्यतिरेकः तृणान्वये वह्निरित्यन्वय-व्यतिरेकाभ्यां तत्रैव स्तोमे तदितरसकलहेतुसमवधाने[1] तृणान्वयेऽवश्यं वह्निरिति नियतान्वयेन रासभादिव्यावृत्तेन तृणा-दिकारणताग्रह इति चेत्। न। तृणं विनापि वह्नि-रिति ज्ञाने सति वह्निनियतपूर्ववर्त्तित्वस्य कारणत्वस्य ग्रहीतुमशक्यत्वात् तृणाजन्ये वह्नौ मणेः कारणत्व-ग्रह इति चेत्। न। व्यभिचारेण वह्नौ तृणजन्यत्वाग्रहे तदजन्यत्वस्याप्यग्रहात् वह्निमात्रस्यैव तदजन्यत्वाच्च। न च मण्यजन्यत्वेन तृणजन्यत्वग्रहः, अन्योऽन्याश्र-यात्। यत्तु यत्र कारणताग्राहकं नास्ति तत्र व्यभि-

---

'वह्नौति, व्यभिचारेण तृणाजन्यत्वं ग्राह्यमिति वह्नित्वावच्छिन्नं प्रत्येव मण्जिन्यत्वग्रहो वाच्यः स च न सम्भवति व्यभिचारादेवेति भावः।

*ननु तृणस्य विशेषं प्रति न व्यभिचार इति विशेषमाशङ्क्य* तन्निषेधति, 'न चेति।

---

(१) तदितरहेतुसकलसमवधान इति पा०।

चारस्तद्ग्रहपरिपन्थीति । तन्न । अबाधितनियतपूर्ववर्त्तित्वाभावग्रहे तद्ग्रहस्यासम्भवात् अभावप्रमायां भावज्ञानानुदयादिति उच्यते । उक्तग्राहकैर्वह्निनिष्ठकार्यतानिरूपितकारणतावच्छेदकरूपवत्त्वं तृणस्य तृणनिष्ठकारणतानिरूपितकार्यतावच्छेदकरूपवत्त्वं वह्नेर्वा अकार्य्याकारणव्यावृत्तं रूपं परिच्छिद्यते न तु तृणत्वेन कारणत्वं वह्नित्वेन कार्यत्वं वा, तदोभयथापि सम्भवति वह्नित्वेन कार्यतया तदनुकूलशक्तियोगित्वेन च [१]तृणादीनां कारणतया वह्नित्वावान्तरजाति-

---

'उक्तेति, अन्वय-व्यतिरेकौ द्वौ नियतान्वयैक इति विनाङ्-मङ्गवचननिर्देशः । 'अकार्य्याकारणेति कार्य्य-कारणभाव-इत्यर्थः । न च उक्तव्यभिचारज्ञाने जाते कथमव्यभिचाररूपनियमगर्भहेतुताग्रह इति वाच्यम् । समानप्रकारकविरोधिज्ञानस्यैव प्रतिबन्धकतया तृणत्वावच्छिन्नस्य वह्निजन्यत्वावच्छिन्नहेतुताग्रहेऽपि वह्नित्वाश्रये तृणत्वाश्रयव्यभिचाराग्रहणात् तृणं वह्निजनकमिति तदाश्रययोर्हेतु-हेतुमद्भावग्रहस्तु स्यादेव गङ्गास्नानं विना अश्वमेधात्स्वर्गं इति जानतः "स्वर्गजनकं गङ्गास्नानमिति श्रुतिवाक्यजन्यज्ञानवतः, अत एवाह न तृणत्वेन हेतुत्वं वह्नित्वेन कार्य्यत्वं

---

(१) तदनुकूलशक्तिमत्त्वेनेति ख० ।

विशेषेण कार्य्यतया वा तत्र विनिगमकमुक्तमेव। अथ तृणारणि-मणीनामभावत्रये न कार्य्यं अभावत्रयाभावे कार्य्यमिति अन्वय-व्यतिरेकाभ्यामभावत्रयाभावत्वेन तृणादीनां कारणत्वमिति न व्यभिचारः अभावाभावस्य[1] भावपर्य्यवसन्नत्वादिति चेत्, अभावत्रयाभावः किं तृणादिप्रत्येकव्यापकोऽन्य एव[2] उत तृणादिप्रत्येकमेव, आद्येऽभावस्य कारणत्वमिति

---

मेत्यन्यथा कार्य्य-कारणभावाघटेण हेतुत्वं कार्य्यत्वं वेति सामान्यत एव प्रतिषेधेत। न चोक्तज्ञानस्य हेतु-हेतुमद्भावविषयत्वं अनुभवविरुद्धमिति वाच्यम्। तृणनिष्ठकारणतानिरूपितकार्य्यताश्रयत्वादेरेव कार्य्यकारणभावत्वात्। न च कार्य्यतावच्छेदकत्वज्ञानं कार्य्यतावद्विषयमेव नेति वाच्यम्। तदवच्छेदकत्वस्य तदाश्रयमात्रवृत्तित्वार्थकत्वात् कार्य्यतावच्छेदकत्वविषयत्वे कार्य्यताश्रयत्वविषयत्वनियमात्। न चैवं तृणनिष्ठकारणताप्रतियोगिककार्य्यताश्रयत्वं तद्व्यत्वेनैव क्रियतां, अग्रिमविनिगमकगवेषणस्य सामान्यतोऽवच्छेदकत्वघटं विनानुपपत्तेः सामान्यतोदृष्टावतारे सत्येव परिशेषावतारादिति भावः। 'किं तृणादीति अभावत्रयप्रतियोगिकव्यासज्यवृत्तिप्रति-

---

(१) अभावाभावत्वस्येति ख०।

(२) किं तृणादिप्रत्येकव्यापकोऽप्येक एवेति ख०।

किमायातं तृणादिकारणत्वे। द्वितीये तृणस्य नारणिमण्यभावाभाववत्त्वं तदुभयत्वापत्तेः। एतेनाभावत्रये न कार्य्यं तदभावे कार्य्यमित्यन्वय-व्यतिरेकाभ्यां तृणादिप्रत्येकस्य कारणत्वग्रह इति परास्तम्। स्यादेतत्, मा भूत्सहजशक्तिराधेयशक्तिस्तु स्यात्, तथाहि व्रीहीन् प्रोक्षतीत्यत्र कालान्तरकार्य्यानुकूलोऽतीन्द्रियोऽतिशयः प्रोक्षणजन्योऽस्तीत्युभयवादिसिद्धम्। स व्रीहिसमवेतो न वेति संशये व्रीहिनिष्ठ एव वाच्यः कथमन्यथा प्रोक्षितानामेव तेषां कालान्तरेऽवघातादौ

योगिताक इत्यर्थः, 'नारणीति सकलसाधारणैकानुगतधर्माभावात् प्रत्येकपर्यवसाने स एव दोषः इत्यर्थः, पूर्वमन्वयव्यतिरेकावच्छेदकधर्मेणैव तेनैकत्वमित्युक्तं इदानीमनन्यरूपेणान्वयाद्यनुविधानं कारणतादूषणादिनेति विशेष इति भावः। वस्तुतस्त्वेवमनुगतधर्मेण जनकत्वे फूत्कारेण तृणादेरेवेत्यादिसहकारिनियमानुपपत्तिः स्वन्यजातीयस्वरूपयोग्यतावच्छेदकसमवधानेनैव फलोत्पत्तिः। न च तृणजन्यवह्नौ फूत्कारो जनक इति वाच्यम्। गौरवेण जातौ सम्भवन्त्यामुपाधेरनवच्छेदकत्वात्। तस्मात् फलविरोधमन्तरेण सहकारिनियमानुपपत्तिः स एव तृणादीनामन्योन्यविजातीयं जनकत्वमाक्षिपति तच्च जनकवैजात्यमिति नेच्छानुगतं हेतुतावच्छेदकं। अत एव तृणाद्यन्यान्यत्वेनाप्यनुगतेन जनकत्वमपास्तमिति सङ्क्षेपः। उभयसिद्धतामेव व्यवस्थापयति, 'कथमिति, तदेवासिद्धमित्याशङ्क्ते,

विनियोगः, न च मन्त्रादिसहकृतत्वमेव व्रीहिषु विशेषः, तेषां चिरध्वस्तत्वात्। ननु कथं प्रोक्षितस्यैवावघातादावन्वयः "व्रीहीनवहन्तीति श्रुतेस्तन्मात्रान्वयेऽप्युपपत्तेः। अथ "व्रीहिभिर्यजेत" "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ति" "पुरोडाशैर्यजेतेत्यत्र यथा पुरोडाशे प्रकृत्यपेक्षायामवहतव्रीहीणामवयवानुवृत्तिद्वारान्वयः प्रोक्षणे च यागार्थमुपात्तव्रीहिणां तथावघाते व्रीह्याकाङ्क्षायां प्रोक्षितानामेवान्वयः बाधकं विना शब्दानां सन्निहितविशेषपरत्वनियमात्, व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति न्यायात्, अन्यथा प्रकरणादिसन्निहितत्यागे तदन्यसन्निधिकल्पने गौरवमिति चेत्। न। तन्त्रैकस्य द्वयं यत्र प्रोक्षणं तत्रावघातो न तु प्रोक्षणविशिष्टे यत्र रूपं तत्र रस इतिवत्, तथाच प्रोक्षणस्य शब्देन काला-

'नन्विति, ननु प्रोक्षिता इत्यत्र प्रोक्षणध्वंसस्य प्रतीतेः किं प्रोक्षणध्वंसजनकतायां तात्पर्यमथवा पूर्ववर्त्तिता प्रोक्षणस्येति सन्देहे विनिगमकमनुमानमाह, 'प्रोक्षणस्येति। न च ध्वंसहेतुतावादिनस्तदर्थमुपादीयमानत्वमसिद्धमिति वाच्यम्। तदर्थमुपादीयमानत्वेन विधीयमानत्वस्य विवक्षितत्वात् उपादानपदस्य विधिवचनत्वात् तथाच तत्कृपन्ताप्रवृत्तविधिप्रतिपाद्यत्वादिति पर्यवसितं। अस्ति च "व्रीहिभिर्यजेतेति श्रुत्यनन्तरं कथमेतदित्याकाङ्क्षायामवहन्तीतितत्कथ-

न्तरकार्यजनकत्वाबोधनात् कथं तन्निर्वाहार्थमति-शयकल्पनम्। "प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते" इति वाक्यशेषात्प्रोक्षणविशिष्टस्यावघाते कारणताबोध इति चेत्, अस्तु तावदेवं, तथापि प्रोक्षिता इत्यत्र भूते क्तानुशासनादतीतप्रोक्षणे व्रीहाववघातान्वयः, तथाचावघाते प्रोक्षणध्वंसः कारणं न तु प्रोक्षणमिति। मैवम्। प्रोक्षणमवघातजनकम् प्रमाणतस्तद्धर्ममुपादीयमानत्वात् अवघाते व्रीहिवत्। न चासिद्धिः, अप्रोक्षितेऽवघाताभावादवश्यमवघातार्थं प्रोक्षणोपादानात्। न च व्यापारं विना तथा सम्भवति। न च प्रोक्षणध्वंस एव व्यापारः, प्रतियोगिनोऽहेतुत्वापातात्। अन्यथा यागादावपि[1] तथा स्यात्। फलस्य च नियतसमयोत्पत्तिकत्वमपूर्ववत् स्वभावादेव भविष्यति। न च प्रोक्षणोपलक्षिता व्रीहयस्तथा,

---

क्तायां प्रोक्षणविधिप्रवृत्तिस्तयाव्रीहेरेव विनियमकं वाक्यशेषस्य पूर्वभावबोधन इति भावः। वस्तुतस्तु प्रोक्षतीतिविधिना प्रोक्षण-हेतुताप्रतीतेः वाक्यशेषादपि तद्धेतुत्वं प्रतीयते ॥ ध्वंसस्येति न हेत्वसिद्धिरिति भावः। 'प्रतियोगिन इति, यथा चैतत्तथा वक्ष्यते।

---

(१) यागादेरपीति ख०।

निरन्वयध्वस्तत्वेनोपलक्षणस्याहेतुत्वात्, कुरुणा क्षेत्रमित्यत्र तु कुरुज्ञानस्येतरव्यावृत्तक्षेत्रव्यवहारजनकत्वं न तु कुरोः। अन्यथा यागोपलक्षितो यज्ञैव स्वर्गं फलिष्यति किमपूर्वेण। न च देवदत्ताद्यशरीरं देवदत्तविशेषगुणजन्यम् जन्यत्वे सति तद्भोगसाधनत्वात् तन्निर्म्मितस्रग्वदिति तत्सिद्धिः, जन्मान्तरीयैरदृष्टजनकत्वाभिमतैर्ज्ञानेच्छा-प्रयत्नैः सिद्धसाधनात्, तस्मात्प्रोक्षणादयो भावभूतमतिशयं जनयन्त एव कालान्तरभाविकार्यजनकाः प्रमाणतस्तदर्थमुपादीयमानत्वात् यागचिकित्सावत्, स चातिशयो लाघवात् फलसमानाधिकरण इति व्रीहिनिष्ठ एव तेन तत्समवहितत्वं व्रीहेः साक्षात्सम्बन्धात् पुरुषनिष्ठत्वे च व्रीहिणा साक्षात्सम्ब-

---

'आद्येति प्रायेणाव्यवहितकालवृत्तीत्यर्थः, 'भोगेति। यद्यपि ज्ञानजनकत्वस्यैव सामर्थ्यं व्यर्थविशेषणता तथापि कश्चित्सुखी कश्चिद्दुःखीत्यादिवैचित्र्यानुपपत्तिरदृष्टं विनेति तर्कसूचनाय विशेषणोपादानं, तन्निर्मितेत्युपलक्षणं तद्भोगसाधनेत्यपि विशेषणं द्रष्टव्यं, अन्यथा साधनवैकल्यापत्तेरिति। 'भावभूतमिति, अथातिशयपादकमेवोक्षणत्वरूपेण भावभूते पर्यवस्यति। यद्वा तथैव साध्यं कर्त्तव्यं यथा च न साध्ये व्यर्थविशेषणता तथोक्तमधस्तादिति। 'फलेति फलोपपादकस्य फलसामानाधिकरण्यौचित्यादित्यर्थः। ननु लाघवं न विनिगमकं

न्याभावात् परम्परासम्बन्धे गौरवात् न साक्षाद्व्रीहिसमवेतत्वं स्यात्। किञ्च यो यद्गतफलार्थितया क्रियते स बाधकं विना तद्गतमेव तदनुकूलमतिशयं जनयति यथा याग-चिकित्से। अथ प्रोक्षणं पुरुषसमवेतातिशयजनकं कालान्तरभाविकार्यजनकत्वे सति विहितत्वात् यागवत् अन्यथा विधिविरोधादिति चेत्। न। कृषि-चिकित्सादिना व्यभिचारात् अप्रयोजकत्वाच्च तेन विनापि विधिसम्भवात्। स च प्रतिव्रीहि नानैव। न चैवमेकव्रीहिनाशे फलानुदयस्तावत्संस्काराणामभावादिति वाच्यम्। संस्कारत्वेन प्रयोजकत्वे किञ्चित्समवधानेऽपि दण्डादिवत्कार्यसम्भवात्। अस्तु वा सकलव्रीहिनिष्ठ एक एव। न चैकव्रीहिनाशे तन्नाशापत्तिः, किञ्चिदाश्रयनाशस्य दृष्टादाविव

---

उभयपक्षसत्त्वात् यथा फलसामानाधिकरण्ये प्रकृते लाघवं तथैकत्वेनापूर्वं इत्यस्वरसादाह, 'किञ्चेति, प्रोक्षणं व्रीहिसमवेतातिशयजनकं तन्निष्ठफलान्वितया क्रियमाणत्वादित्यवष्टम्भेन प्रतिसाधकस्य बलवत्त्वादिति भावः। उक्तानुमाने सत्प्रतिपक्षं शङ्कते, 'अथेति, 'व्यभिचारादिति तथाचासत्प्रतिपक्षितमुक्तानुमानमेव विनिगमकमित्यर्थः, सामानाधिकरण्यलाघवस्यादरे विनिगमनार्थापत्त्यनुमानमेवाप्रयोजकमिति लाघवमेव विनिगमकं वाच्यं तच्चैकत्वपक्षे सामानाधि-

कार्य्यानाशकत्वादिति। उच्यते। अतिशयग्राहक-मानालाघवसहकृतात् स एक एव सिध्यति न नाना पुरुषनिष्ठश्च तथा हि प्रोक्षणमपूर्वजनकं दृष्टद्वाराभावे सति कालान्तरभाविफलजनकतया विहितत्वात् याग-तदङ्गवत् कृष्यादौ दृष्टद्वारसम्भवात् न व्यभिचारो न वाऽप्रयोजकत्वम्। याग-दान-होमादि-तदङ्गानामपूर्व-जनकत्वे दृष्टद्वाराभावे सति कालान्तरभाविकार्यज-नकतया विहितत्वस्यैव प्रयोजकत्वादन्यस्याननुगमात्। न च यो यद्गतफलार्थितया क्रियते स बाधकं विना

---

करणस्यापि तावच्छिन्नत्वमालेन गुरुत्वात् अनुमानान्तरोपष्टम्भाद्वे-त्यभिसन्धायापूर्वं साधयति। अतीतप्रकारार्थमनुमानमाह, 'अपू-र्वेति, 'अपूर्वजनकं' अवघातानुकूलापूर्वजनकमित्यर्थः, तेन निय-मापूर्वजनकतायास्तेनाभ्युपगमाच्च सिद्धसाधनमिति भावः। 'दृष्टेति व्याप्तिः, दृष्टद्वाराभावे कालान्तरभावि यत्कार्यानुकूलतया यद्वि-हितं तत्तदनुकूलापूर्वजनकमिति सामान्यमुखी द्रष्टव्या, अर्थस्तु 'दृष्ट-द्वाराभावे सतीत्यस्यादृष्टान्यद्वाराभावे सतीति, प्रायश्चित्ते व्यभि-चारवारणाय 'कालान्तरेत्यादि। न चैवं 'विहितत्वादित्यधिकं, साध्यनिष्ठापूर्वपदस्य धर्मपरतया निषिद्धकर्मणि व्यभिचारवारणाय तदुपादानादिति। 'कृष्यादाविति, यद्यपि विहितत्वाभावेनैव न तत्र व्यभिचारः तथापि प्रत्येकवर्णोपायविभागविधिना वैश्यस्य कृषिवि-

तन्नतमेव तदनुकूलं फलं जनयतीति नियमः, शत्रुवधमुद्दिश्य प्रवर्त्तिते श्येनयागादौ व्यभिचारात् विपक्षे बाधकाभावाच्च । नापि यदुद्देशेन यत् क्रियते न तत् तत्र भाविकार्यानुकूलातिशयजनकमिति नियमः, हविस्त्यागादिभिर्व्यभिचारात् । ननु प्रोक्षितव्रीहिणा अदृष्टस्य जनितत्वाद्दर्हिष इव न तस्य पुनरुपयोगान्तरं स्यात्

---

धानात् विहितपदस्य बलवदनिष्टाजनकपरत्वाद्वा श्येनादौ विहितत्वगर्भहेतुगमनं द्रष्टव्यं। 'नियम इति, तथाच तदवष्टम्भात् प्रोक्षणं व्रीहिनिष्ठातिशयजनकं व्रीहिनिष्ठकार्यान्तरभाविफलार्थितया क्रियमाणत्वादित्यनुमानात् सत्प्रतिपक्ष इति भावः। 'शत्रुवधमिति, एतच्च तन्मते स्वमते फलोपपादकमपूर्वं फलाश्रय एव कल्प्यत इत्यपे वक्ष्यमाणयुक्त्या गयाश्राद्धापूर्वस्य पितरीव श्येनापूर्वस्य शत्रुनिष्ठत्वमेव, अत एव पक्षमटीकापि इममर्थं सिद्धवदाह, परमतेऽपूर्वं वाच्यं अतो विधिप्रत्ययवाच्यस्य कार्यस्य कर्त्रन्विततयैव प्रतीतेः कृतिसमानाधिकरणमेवापूर्वं, न हि स्वर्गकामो यजेतेत्यत्र यागविषयकं कार्यमित्यन्वये कर्त्तर्याख्यातवाच्यसंख्यान्वय', भावनान्वयिनैव तदन्वयादिति, स्वर्गकामो यागविषयककार्यवानित्येव सर्वत्रान्वय इत्यस्यापूर्वाश्रयत्वमतेऽपि दुष्कल्पमिति तन्मतेनेदमुक्तं, स्वसन्मते दोषमाह, 'विपक्ष इति। न च फलसामानाधिकरण्यलाघवमेव विपक्षबाधकमिति वाच्यं। नानात्वगौरवेण तल्लाघवानादरत्वसोकत्वादिति भावः। 'यदुद्देशेनेति या क्रिया यद्विषया तन्निष्ठफलानुकूलातिशयजननीत्यर्थः। 'बर्हिष-

विनियुक्तविनियोगविरोधात् उपयोगे वा तज्जातीयान्तरमप्युपादीयेताविशेषात्। न। "व्रीहीनवहन्तीत्यत्रोक्तन्यायेन प्रोक्षितस्यैव व्रीहेरन्वयात् विधेर्दुर्लङ्घ्यत्वात् यथा बर्हिस्तृणोति बर्हिषि हविरासादयतीत्यत्र। यद्वा विचित्राः संस्काराः केचिदुद्देश्यसहकारिण एवाग्रिमकार्यकारिणः यथाभिचारसंस्कारो यं देहमुद्दिश्य प्रयुक्तः[१] तदपेक्ष एव तत्सम्बद्धस्यैव दुःखं जनयति, तथा प्रोक्षणसंस्कारा अपि उद्देश्यव्रीहिसहकृता एवाग्रिमकार्य्यकर्त्तारः। यथा कारीरीजनितसंस्काराधारपुरुषसंयोगाज्जलमुचामदृष्टसमवधानं तथा प्रोक्षणजन्यादृष्टवदात्मसंयोगात् व्रीहीणामुत्तरक्रियाविशेषाः कर्तृकर्मसाधनवैगुण्यात् फलाभावस्तुल्य एव आगमिकत्वात् चाण्डालादिस्पर्शस्याहवनीयादिसंस्कारनाशकत्वश्रुतेर्व्यधिकरणस्याप्यपूर्वनाशकत्वम्। धर्म्मनाशे कर्म्मनाशापारगमनवत् निषिद्धकीर्त्तनवच्च। किञ्च प्रोक्ष-

इवेति बर्हिर्यागस्येत्यर्थः, यद्वा बर्हिषो याग इवेति व्यतिरेकदृष्टान्तः, तेन यथा बर्हिस्तृणोति बर्हिषि हविरासादयतीतिशब्दबलात् तत्र विनियुक्तस्यापि विनियोगः तथात्र न पुनरुपयोगः स्यादिति भावः। 'तज्जातीयेति, अनाकाङ्क्षया अविशेषादिति भावः। 'उक्तेति

(१) प्रयुक्त इति ख०।

यजन्यातिशयो व्रीहिनिष्ठो न नाना आत्मवृत्तेरेकस्मादप्युक्तन्यायेन कार्य्योपपत्तेः। नाप्येकः, एकद्विव्याश्रयनाशानां प्रत्येकमननुगमेन कार्य्यनाशे आश्रयमात्रनाशस्य जनकत्वादेव व्रीहिनाशेन तन्नाशादप्रोक्षितव्रीहीणामनन्वयापत्तेः। अथ "व्रीहिन् प्रोक्षतीतीप्सितद्वितीयाश्रुतेः क्रियाजन्येष्टफलभागित्वं व्रीहेरेवावगम्यते, न चापूर्वस्य व्रीहिवृत्तित्वम्, साक्षात्सम्बन्धस्यौत्सर्गिकत्वादिति चेत्। न। धात्वर्थतावच्छेदकसंयोगेन व्रीहिकर्म्मतोपपत्तेः। न च संयोगावच्छिन्न एव व्यापारविशेषः प्रोक्षणार्थस्तथा च कथं प्रोक्षणैकदेशस्य प्रोक्षणसाध्यतयान्वय इति वाच्यम्। संयोगस्योपलक्षणत्वेनापदार्थत्वात् अन्यथा ग्रामं गच्छतीत्यादौ

---

च्छिवचनान्यायेनेत्यर्थः, 'संयोगस्येति। ननु फलस्योपलक्षणत्वे तत्तद्व्यापारमात्रस्यैव धात्वर्थत्वे त्यज-गम्योः पर्यायतापत्तिरवच्छेदकीभूतयोः फलयोर्विभागसंयोगयोर्धात्वर्थप्रवेशे स्पन्दमात्रस्याविशिष्टस्योभयधात्वर्थत्वात् कर्ममात्रस्यैवोभयजनकत्वेन पतनादिवदवान्तरजातिमादाय अर्थभेदस्य दुरुपपादत्वादिति। नैवं। व्यापारे उपलक्षणीभूतस्यापि फलस्य प्रतीतिविशेषणत्वादिष्टसाधनत्वविधिपक्षे क्रियोपलक्षणस्यापि इष्टस्य ज्ञानविशेषणतावत् तदत्र फलविशिष्टो व्यापारो यदि वाच्यस्तदा फलविशिष्टव्यापारधीः शब्दादपरथा फलोपलक्षित-

का गतिः, का वा सक्तून् प्रोक्षतीत्यादौ तत्राधेयशक्त्यभावात्। किञ्च घटं साक्षात्करोतीत्यादौ क्रियाजन्यसंस्कारादीनां घटावृत्तित्वात् संस्कारस्य स्वरूपसम्बन्धेन घटवृत्तित्वम् वह्निमनुमिनोतीत्यादिवत्। प्रयोगसाधुरेव वा द्वितीयेति यदि तदा प्रकृतेऽपि तथास्तु। अथ प्रतिमादौ प्रतिष्ठाजन्यं न यजमानादृष्टं पूज्यत्वे प्रयोजकं भोगादिना तन्नाशेऽपि पूज्यत्वात् तत्सत्त्वेऽपि चाण्डालादिस्पर्शेनापूज्यत्वात् अन्यधर्मं प्रत्यन्यधर्मस्यानुपयोगाच्च। न च प्रतिष्ठाध्वंसस्तथा, तत एव उपजीव्यप्रतिष्ठाप्रयोजकत्वभङ्गापत्तेश्च। तस्मात्प्रतिष्ठाजन्या अस्पृश्यस्पर्शादिनाश्या प्रतिमादिनिष्ठा शक्तिरभ्युपेया इति चेत्, प्रतिष्ठाविधिना प्रतिमादौ देवतासन्निधिरहङ्कार-ममकाररूपः क्रियते स्वसादृश्यदर्शिनश्चिवादौ इव ज्ञानस्य नाशेऽपि संस्कार-

---

व्यापारधीरित्युभयथापि फलांशेऽपि शक्तेः क्व प्रतीतविषयो येन पर्यायता विशेषणत्वे प्रकृते कर्मत्वानुपपत्तेः लक्षणत्वं अपयेदित्यत्र फलविशिष्टधात्वर्थबाधादित्यनुपपत्तेश्चानुगतिकतयोपलक्षणपद आश्रीयते न त्वन्यः कुतोऽपीति दिगिति भावः। ननु प्राप्य-संस्कार्यकर्मणोरेवमविशेषे कर्मचातुर्विध्यं विरुध्येतेत्यरुचेः संस्काररूपफलभागितयैव कर्मत्वमित्याह, 'किञ्चेति, 'प्रयोगेति संस्काराभाव उपेचा-

सत्त्वात् अस्पृश्यस्पर्शादिना च तन्नाशः। अचेतनदेवतापक्षे च यथार्थप्रतिष्ठितप्रत्यभिज्ञानस्यास्पृश्यस्पर्शादिविरहसहकृतस्य तथात्वम् "प्रतिष्ठितं पूजयेदिति विधिबलात्तत्प्रतिसन्धानस्यावश्यकत्वादिति प्राञ्चः।

नव्यास्तु प्रतिष्ठाविधिनैव तदाधेयशक्तिवदपूर्वान्तरं जन्यते तददृष्टवदात्मसंयोगाश्रयस्य पूज्यत्वम् अस्पृश्यस्पर्शेन तन्नाशे चापूज्यत्वमित्याहुः।

वयन्तु ब्रूमः "प्रतिष्ठितं पूजयेदिति विधिवाक्येन प्रतिष्ठायाः कारणत्वं न बोध्यते किन्तु भूतार्थानुशासनादतीतप्रतिष्ठे पूज्यत्वं बोध्यते तथाच प्रतिष्ठाध्वंसः प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शादिप्रतियोगिकानादिकालसंसर्गाभावसहितः पूज्यत्वप्रयोजकः स च प्रागभा-

---

ज्ञानेऽपि तथाच प्रयोगादिति भावः। 'प्रतिष्ठाकालीनेति, न चास्पृश्यस्पर्शकालीनप्रतिष्ठयापि पूज्यत्वापत्तिः, तत्र कर्मवैगुण्येन प्रतिष्ठाया एवासत्त्वात्। न चानाद्यनन्तभावो गौरवं यावन्तोऽस्पृश्यस्पर्शाभावास्तावदभावसहितस्यैव पूज्यताप्रयोजकत्वसम्भवादिति वाच्यं। तावदभावसहितप्रतिष्ठाध्वंसस्य हेतुत्वे तावन्तोऽभावा अपि हेतव इति ध्रुवं, तथाचानाद्यनन्तभावे साध्यभावानामपि जनकत्वमिति बहूनां जनकत्वे गौरवमित्यन्यजनकत्वसाधनेन चादिस्थापदानर्थक्यभ्रमादिपदोपादानात् यच्च लोकस्था एव व्यक्तिजनकत्वमुभाभ्यामेवावच्छेदकाभ्यां

वोऽत्यन्ताभावश्च क्वचित्[१]। कामिनीचरणाघातदोहदादिभिरशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिसिद्धिः समयविशेषावच्छिन्नचरणदोहदादिसंयोगध्वंसस्यैव कारणत्वात् चरणाभिघाताद्यात्मष्टभागान्तरजनितवृक्षादेव वा तदुपपत्तेः कालान्तरे पुष्पाद्युत्कर्षाद् वृक्षावयवोपचयावश्यम्भावेन वृक्षभेदावश्यकत्वात्। नापि ताम्र-कांस्यादौ अस्तु भस्मसंयोगादिजन्यशुद्धिरूपा आधेयशक्तिः, तत्संयोगध्वंसस्य संयोगसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसहितस्य शुद्धिपदार्थत्वात्।

भस्मादिसंयोगजनितः कांस्याद्युपभोगकर्तृनिष्ठः संस्कार एव शुद्धिरित्यन्ये।

अभिमन्त्रितपयःपल्लवादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्याध्यपनायकः तत्तन्मन्त्रदे-

सविशेषण-निर्विशेषणाभ्यां तथोपन्यस्तक्रमेण[२] सविशेषणे गौरवं यच विशेषणापसारादत्यन्तानां व्यक्तीनां जनकत्वं तच तद्व्यावर्त्तनार्थं विशेषणपरिग्रह एव लाघवादत एव संसर्गेत्यप्युक्तमिति स्वच्छमिति भावः। 'क्वचिदिति यच कदाप्यस्पृश्यस्पर्शो जात एवेत्यर्थः। न चैवं

(१) क्वचित् क्वचिदिति ख॰।

(२) उपन्यस्तस्यैवेति क॰।

वतासन्निधिरेव वा। कलमबीजादीनामापरमाणु-
न्तभङ्गे तत्र चावान्तरजातेरभावे नियतकलमजाती-
यादिसिद्धिरपि परमाणुपाकजविशेषादेव कार्यवृत्ति-
रूपादिसजातीयस्य पूर्वरूपविजातीयस्य परमाणौ पा-
कजरूपादेरुभयसिद्धत्वात्। यथा हि कलमबीजं यवा-
देर्जात्या व्यावर्त्तते तथा तत्परमाणवोऽपि पाकजैरेव।
एवं माषकर्षणादिजनितात्परमाणुपाकपरम्पराविशे-
षादेव हैमन्तिकसस्योत्पत्तिः। एतेन लाक्षारसावसेका-
दयो व्याख्याताः। निमित्तविशेषजनितपाकजात्तत्फ-
लविशेषः यथा हारीतमांसं हरिद्रानलसाधितमुपभो-
गात्सद्यो व्यापादयति नान्यथा साधितमित्यादि। यत्र
च तोय-तेजोवायुषु न पाकजो विशेषः तत्रोद्भवानु-
द्भव-द्रवत्व-कठिनत्वादयो विशेषास्तदुपनायकादृष्टवि-

---

प्रतियोग्यप्रतीतिस्तत्प्रतिमाप्रतियोगिकाभावस्य प्रागभावादिति वाच्यं।
प्रतिमाया अभावविशेषणं न तु प्रतियोगिविशेषणत्वादिति भावः।
'परमाणुपाकजेति, न च विशेषो यदि व्यक्तितः तदातिप्रसङ्गः
सामग्रीवैचित्र्ये जातितस्तत्सम्भावित इति वाच्यं। कलमध्वंसादि-
रूपकारणभेदेनैव कारणवैजात्येन जातितस्तस्यैव सम्भवादिति भावः।
'उद्भवेति, अत्र यद्यप्युद्भूतादेवोद्भूत इति सिद्धान्तस्तदाऽयं अतद्गुण-
संविज्ञानबहुव्रीहिरित्यवधेयं। न तयोरुद्भूतादेवोद्भूतमिति सम्यक्

श्रेषादेव। तुलादौ चाधिवासनादिपूर्वकतुलारोहणसामग्री तुल्यस्य सत्यासत्यप्रतिज्ञत्वसहिता प्राचीनधर्माधर्मफले जय-भङ्गौ जनयति। यद्वा अहं निष्पापः पापवान्वेति तुलाधिरूढाभिशस्तज्ञानविशेषसहिता सा तथा, तदाहुः, "तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः"[1] इति। अथ वा प्रतिज्ञाशुद्ध्यशुद्धी अपेक्ष्य

---

कथमन्यथानुद्भूतादनुद्भूतानुत्पत्तिनियमः कार्यसाजात्ये कारणसाजात्यकल्पना च स्यात् अदृष्टनिमित्तकत्वे द्वयस्यानुपपत्तेरिति। ननु विनयमप्यसङ्गतमाद्ययोस्तुलादिसामग्र्याः क्षणिकत्वे कालान्तरभाविजयादिजनकत्वानुपपत्तिरन्त्ये ज्ञापिकायाः सामग्र्या अपूर्वजनकत्वे मानाभाव इत्यस्वरसादाह, 'यद्वेति, सन्निधिस्थानेन विधिना तुलारूढोऽयं निष्पाप इत्यादिज्ञानजन्यसंस्कार इत्यवधेयं। न च संस्कारस्थैर्यादन्यदापि तुलारोहेण जयाद्यापत्तिः, फलबलकल्प्यतयाऽन्यदा तत्संस्कारनाशस्यापि कल्पनादिति। 'स्वेति, यत्र यत्र कार्यस्य घटादेरभावस्तत्र दण्डादेरभाव इति कार्यसम्बन्धाभावे दैशिक्येव व्यापकता यद्वा कार्याभावस्तदा दण्डाभाव इति कालिक्यां सामग्रीकाले व्यभिचारात्, एवं दण्डसत्त्वेऽपि चक्राद्यभावेन घटाभावे व्यभिचारात् कथं व्यापकत्वेनेति व्यभिचारवारणाय कार्याभावं विशिनष्टि, 'स्वेतरसकलसम्पत्ताविति, तेन दण्डेतरसकलसम्पत्तौ सत्यां यत्र घटाभावस्तत्र

---

(१) स्वस्यैवान्तरपूरुष इति ख॰।

तया धर्माधर्मौ जन्येते ताभ्याञ्च जय-पराजयौ, सत्यासत्यप्रतिज्ञाभिशस्ततुलारोहणस्येष्टानिष्टफलत्वेनार्थतोविधि-निषेधात् "अभिशस्तः सत्यप्रतिज्ञो विजयकामस्तुलामारोहेदसत्यप्रतिज्ञो न तुलामारोहेत्" इति श्रुतेरुन्नयनात्। यद्वा तया देवतासन्निधिः क्रियते ताश्च कर्मानुरूपं लिङ्गमभिव्यञ्जयन्ति । कस्तर्हि प्रकृतिपदार्थः[1] कारणत्वम् तच्च स्व स्वव्याप्येतरस-

---

दण्डाभाव इति न व्यभिचारः, तावति सत्ते चासिद्धेः दण्डेतरसकलमध्यपतितानां चक्रभ्रम्यादीनां सम्पत्तौ घटाभावाप्रसिद्धेरत-उक्तं 'स्वव्याप्येति, तथाच चक्रभ्रम्यादीनां दण्डव्याप्यतया तदितरकालीनकार्याभावं प्रति व्यापकत्वमस्त्येव दण्डाभावस्य, व्याप्यत्वञ्च स्वप्रागभावव्यापकाभावप्रतियोगित्वं, व्यापकत्वन्तु कालिकमिति भावः। अत्र वदन्ति स्वेतरपदस्य स्वेतरतत्कारणपरत्वं वा, स्वेतरमात्रपरत्वं वा, आद्ये आत्माश्रयत्वं, अन्त्येऽसम्भवः घटाद्युत्पत्तौ वेमाद्यसमवधानात्। किञ्च यत्र स्वमप्यस्ति तत्र स्वेतरसमवधानमप्यस्तीति तत्र कार्याभावाप्रसिद्धिः। न च स्वेतरसमवधानेन स्वासमवधानं विवक्षितं, अजनकसाधारण्यात्। न हि यत्र स्वाभावे कार्याभावः तत्र न स्वाभाव इति सम्भवति, तथाच वेमोऽपि घटं प्रति हेतुतापातः। अपि च कुलालपितुरप्येवं घटजनकतापत्तिः। किञ्च दिगादिहेतावव्याप्तिः

---

(१) प्रकृतिपदस्यार्थं इति ख० ।

कालसम्पत्तौ[१] कार्याभावव्यापकाभावप्रतियोगित्वम्।

कार्याभाववति देशे काले वा तदभावाभावात्। अपि च यत्र कार्याभावस्तत्र दण्डाभाव इति नास्ति दण्डावयवे घटाभाववति दण्डाभावाभावात्। अत्र ब्रूमः। स्व-स्वव्याप्येतरपदेन कार्यप्रागभावव्याप्यप्रागभावप्रतियोगिसकलसम्पत्तिः विवक्षितेति नासङ्कुचितं सकलपदं, न वा कारणपदं, व्याप्तिश्च कालिकीत्युक्तं।

यत्तु स्वसमवधानेऽपि स्वेतरसकलसमवधानमित्यादि। तत्तुच्छं। यत्र स्वेतरसमवधाने कार्याभावस्तत्र स्वाभाव इत्यत्र कालिकतादृशाभावप्रसिद्ध्यैव व्यभिचाराभावात्। न हि स्वेतरसकलसमवधानं यत्र तत्र कार्याभावनियम-इति ब्रूमः येनोक्तस्थले कार्याभावाभाव उद्भिद्येत। अत एवाजनकतातिव्याप्तिशङ्कापि न तथोक्तनियमाभावात्।

यदपि कुलालपितुरित्यादि, तदपि न, इदं हि कारणसामान्यलक्षणं तथाच कुलालपितृत्वेनान्यथासिद्धत्वेऽपि कुलालत्वेन तस्यापि जनकतयाऽतिव्याप्त्यभावः। न च कुलालपितृत्वेन जनकतापत्तिः, यस्य कार्याभावव्यापकाभावप्रतियोगित्वं तस्य हेतुत्वमेव लक्षणार्थो न तु यदवच्छिन्नाभावप्रतियोगित्वपर्यन्तमित्यापादकाभावात् येन केनापि रूपेणोक्तधर्मवत्त्वस्यैव जनकत्वस्वरूपत्वात्। न च दण्डरूपादावन्यथासिद्धेऽतिव्याप्तिः, तस्य स्व-स्वव्याप्येतरदण्डसम्पत्तावेव कार्याभावाभावेनोक्तरूपाभावात्। अत एव दण्डत्वमपि निराकृतं

(१) स्व-स्वव्याप्येतरसकलकारणसम्पत्ताविति क०।

तत्र तद्व्याप्त्यप्रसिद्धेः । न चैवं नित्यमात्राव्याप्तिः, अग्रे निरसनीयत्वात्, ज्ञानं प्रत्याकाशस्य कार्याभावव्यापकाभावप्रतियोगित्वमेव नास्त्याकाशाभावाप्रसिद्धेः । न च शब्देऽप्येवमहेतुतापत्तिः, अग्रे निरस्यमानत्वात्, गन्धं प्रति रूपप्रागभावादीनान्तु स्व-स्वव्याप्येतरसकलसम्पत्तौ यत्र कार्याभावस्तत्र स्वप्रागभावाभाव एवोत्पन्नपुनरुत्पादस्थले दृष्टो न तु व्यापकप्रागभावाभावो व्यापकप्रागभावानां तदापि सत्त्वात् । कार्याभावव्यापकाभावप्रतियोगित्वन्तु तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वं तदस्ति स्वप्रागभावस्य न तु तद्व्यापकप्रागभावस्येति नातिव्याप्तिः । यद्वा अनन्यथासिद्धत्वमिहापि लक्षणे देयमतो न कुलालपित्रादिष्वतिप्रसङ्गः ।

यत्तु नित्यस्यात्मादेरित्यादि, तन्न, यदवच्छिन्नाभावव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वस्य हेतुत्वरूपत्वादस्ति चात्मत्वावच्छिन्नाभावस्य ज्ञानाभावाव्यापकत्वेऽपि गुणत्वावच्छिन्नाभावं प्रति समवायित्वावच्छिन्नाभावस्य व्यापकत्वं, अस्ति च दिक्कालयोस्तत्त्वावच्छिन्नाभावस्याव्यापकत्वेऽप्याधाराभावत्वेन तदभावस्यापि कार्याभावव्यापकत्वमत एव ज्ञानं प्रत्याकाशमहेतुः केनापि रूपेण तदभावस्य कार्याभावाव्यापकत्वात्, यदभावस्य येन केनापि रूपेण यत्किञ्चिद्रूपावच्छिन्नयत्कार्याभावव्यापकत्वं तस्यैव तद्धेतुत्वमिति प्रकृतलक्षणार्थत्वात् । न चैवमात्मत्वं हेतुतावच्छेदकमपि न ज्ञाने हेतुत्वस्य कार्याभावव्यापकाभावप्रतियोगित्वरूपस्य तेनानवच्छेदात् सामान्यसामग्रीत एवं कार्यं न तु विशेषसामग्री कार्येवमिति वाच्यं । तत्कार्यं प्रति स्वस्वसमवायितयैवात्मत्वपर्यवसानात् । न च सम-

अथ वा यत्र कार्य्याभावव्याप्यता इतराभावावच्छिन्ना

वाधिकारणतावच्छेदकं कथं समवायित्वमिति वाच्यं। समवायिकारणत्वस्य विशिष्टस्यानवच्छेदत्वात् गौरवात् नीलघटत्ववत् अपि तु समवायित्वावच्छेदेन कारणत्वमित्यत एव तत्समवायिकारणं भवति।

वस्तुतस्तु यदेतदात्मत्व-दृढदण्डत्वादिकं कारणतावच्छेदकं तत्कार्याभावव्यापकाभावप्रतियोगित्वकारणत्वमिति मते न किन्तु सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं हेतुत्वमिति पक्षे तेषामेव सहकारिविरहप्रयुक्तकार्याभाववत्त्वावच्छेदकत्वात् न हि नियतपूर्ववर्त्तित्वकारणत्वपक्षेऽपि दृढदण्डत्वं कारणतावच्छेदकं, किन्तु दण्डत्वमेव लाघवात् किं बहुना प्रमेयत्वादेरपि तदा हेतुतावच्छेदकत्वापत्तेः तस्मात् सहकारिवैकल्येत्यादिकारणतापक्ष एव तदवच्छेदकमिति समवायित्वाधारत्वावच्छिन्नाभावस्य कार्याभावव्यापकत्वे सहकारिवैकल्येत्यादेरात्मत्वाद्यवच्छेद्यत्वे न कोऽपि विरोध इति सर्व्वं सुस्थं।

यत्तु घटाभाववति दण्डावयवे दण्डसत्त्वात् व्यभिचार इति, तन्न, कार्याभाववति यत्सम्बन्धावच्छिन्नो यदभावः तत्सम्बन्धावच्छिन्नत्वस्य हेतुत्वरूपत्वात् अस्ति च घटाभावव्यापको यो दण्डसंसर्गाभावः स दण्डावयवेऽपि, न चेदेवं तदा यत्र धूमो धूमावयवे तत्र वह्न्यभावात् धूमे वह्निव्याप्तिरपि न स्यादित्यलमधिकेनेति। नन्विदं कारणत्वमतीन्द्रियघटितसकलसम्पत्तिगर्भतया दुर्ग्रहं प्रत्यक्षस्याप्रवृत्त्या साध्याप्रसिद्ध्यादिना मानान्तरस्याप्रवृत्तेरित्यस्वरसादन्यदेव तल्लक्षणमाह, 'अथवेति, यत्र कार्याभावव्याप्यता इतराभावसहकाराावच्छिन्ना तदवच्छिन्नं कारणं तदवच्छिन्नत्वं कारणत्वमिति यावत्,

तत्कारणं बीजेऽङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतरसमवधाने सति बीजादङ्कुरसम्भवात्। किन्तु इतराभावेनावच्छिद्यते इतराभावे बीजस्याङ्कुराभावनियमात्। शिलाशकले त्वङ्कुराभावव्याप्यता शिलात्वेनावच्छिद्यते।

---

तेन यत्र दण्डाभावस्तत्र घटाभाव इति दण्डाभावत्वनिष्ठघटाभावव्याप्तौ दण्डाभावत्वस्यैवावच्छेदकतया जनके दण्डाभावादावतिव्याप्तिः बीजत्वेन कार्याभावव्याप्ये जनकत्वादसम्भवश्च न सम्भवति तत्र दण्डाभावसहकृतत्वस्यावच्छेदकत्वात्, एवञ्चात्र 'बीज-बीजत्वपदे बीजत्व-बीजत्वत्वपरे, 'इतराभावेन' इतराभावसहकृतत्वेनेत्यर्थः, 'शिलात्वेन' शिलात्वत्वेनेत्यर्थः। अत्र वदन्ति कार्याभावः तज्जनकाद्यभावो वा, तदभावमात्रं वा, आद्ये आत्माश्रयः, अन्त्ये शिलायामङ्कुरस्य संयोगसत्त्वात् सत्त्वेन तत्रापीतराभावसहकृतशिलात्वस्य कार्याभावव्याप्यत्वादिति। अत्र ब्रूमः। उत्पत्तिकालीनसम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं विवक्षितं, अत एवाग्रिमक्षणेऽनुत्पत्तिव्याप्यत्वमित्येव वक्ष्यति, एवञ्च संयोगादिसम्बन्धस्योत्पत्त्यनन्तरकालीनतया तदवच्छिन्नाभावमादाय शिलादौ प्रसङ्गः, उत्पत्तिकालीनश्च सम्बन्धोऽयमेव कारणतासमवायश्च तदवच्छिन्नाभावो नाङ्कुरस्य शिलायां किन्तु तदवच्छिन्नकार्याभावः समवायिनि बीजादौ च दण्डश्च कारणत्वेन। न च कारणतागर्भतयात्माश्रयः, कारणताया अपि सम्बन्धत्वेनैव ज्ञानात्। वस्तुतस्तु बीजादङ्कुर इतिप्रतीतिबलादवध्य-

यद्वा अन्यासमवधानावच्छिन्नकार्य्यानुत्पत्तिव्याप्यत्वं कारणत्वम् रासभादेः स्वत एव कार्य्याभावव्याप्यता

---

वधिमद्भावलक्षणः स्वरूपसम्बन्ध एव विलक्षणः कार्य्य-कारणयोस्तत्सम्बन्धावच्छिन्नकार्य्याभावस्य कारणे इतराभावावच्छेदेन स्वरूपयोग्ये तु तादृशस्वरूपसम्बन्धाभावादितराभावानवच्छिन्न एव तादृशकार्य्याभाव इति क्वाप्यतिप्रसङ्ग इति सर्वमवदातं। अत एव बीजादङ्कुर इत्यादौ हेतुतायामपि पञ्चमीनिर्देशसम्भवेन तादृशप्रतीतेरवध्यवधिमद्भावेन तादृशप्रतीतेरवध्यवधिमद्भावविषयत्वापर्य्याप्तौ बीजादङ्कुरोत्पत्तिरिति प्रतीतेरवश्यमवध्यवधिमद्भावगोचरत्वनियमादिदं लक्षणमपहायाधिमलक्षणे कार्य्यादुत्पत्तेरिव कण्ठरवेणाभिहितं। न चाङ्कुर इवोत्पत्तिरपि सहेतुका येन तथापि हेतुपञ्चम्यन्तत्वेन कल्प्येत। अत एव कुसुमाञ्जलिप्रकाशे उत्पत्तिगर्भकादाचित्कत्वं सहेतुकत्वे लिङ्गं, अतो नोत्पत्तौ व्यभिचार इति स्फुटमेवास्ति। न च स्वरूपद्वयमेव स्वरूपसम्बन्ध इति कथं तथाऽतिप्रसङ्गो वारणीयः इति वाच्यम्। घटे पटाभाव इति प्रतीतिबलेन प्रतियोगित्वलक्षणस्वरूपसम्बन्धविशेषवदवध्यवधिमद्भावस्याप्यनुभवसिद्धतया दुरपह्नवत्वात्, अन्यथा एवंविधविकल्पेन सङ्ख्याकुलीभवेदिति। किञ्चैवं यदि न कल्प्येत तदाधिमलक्षणेऽपि का गतिः नियतपूर्ववर्त्तित्वयोरप्रकाश्यत्वादित्यनुपदमेव स्फुटीभविष्यति।

केचित्तु कार्य्याभावः कार्य्यनियतपूर्ववर्त्तित्वाभावः स तु शिलायां शिलात्वेनावच्छिद्यते बीजेऽन्यासहकृतबीजत्वेन, अत एव कार्य्य-

अन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वात्। अनन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वं वा तत्त्वम्, अन्यथासिद्धत्वञ्च त्रिधा, येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते यथा घटं प्रति दण्डरूपस्य। अन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते यथा शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य। अन्यच क्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तत्सहभूतत्वम्। यथा गन्धवति गन्धानुत्पादात् गन्धं प्रति तत्प्रागभावस्य नियतपूर्ववर्त्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावानामन्यथासिद्धत्वम्। एतत्त्रितयव्यतिरेके

---

नियतपूर्ववर्त्तितागर्भतया लाघवादन्वयमुखं लक्षणं साध्विति व्यतिरेकमुखे अपि लक्षणे परित्यज्य तदेव श्रेयसिद्धान्तयति, 'अनन्यथेतीति वदन्ति।

'अनन्यथेति, अनन्यथासिद्धत्वे सति कार्य्यजातीयपूर्ववर्त्तित्वव्यापकताधिकरणताप्रतियोगित्वमित्यर्थः। तेन यत्र घटपूर्ववर्त्तित्वं तत्र दण्डाधिकरणत्वमिति व्यभिचारेऽपि यत्र घटाव्यवहितपूर्ववर्त्तित्वं दत्यव्यभिचारात् सर्वं साध्विति भावः। अत एवाव्यवहितपदं विनिवेश्य नोपात्तं नियतपदादेव तल्लाभादित्यवधेयं। न च वैयर्थ्यादेव तदनुपादानं, तथा सति चिरध्वस्तेऽपि यागादौ स्वर्गहेतुसाधन-

नियतपूर्व्ववर्त्तित्वं कारणत्वम्, यागापूर्व्वयोस्तु याग-पूर्व्ववर्त्तित्वेऽवगते न त्ववगम्यमाने, यत्र जन्यस्य पूर्व्वभावेऽवगते[1] जनकस्य पूर्व्वभावोऽवगम्यते तत्र जन्येन जनकस्यान्यथासिद्धिः, यत्र च जनकस्य तथा-त्वेऽवगते जन्यस्य पूर्व्वभावावगमः तत्र तद्द्वारा तस्य जनकत्वमेव, दण्डसंयोग-भ्रमणयोस्तु युगपदेव पूर्व्व-भावित्वग्रहः। स्वस्वानन्तरोत्पत्तिकसकलसमवधाने सत्यपि यस्याभावात्कार्य्यं न जायते सति तु जायते तज्जातीयं प्रति तदनन्यथासिद्धम् अनन्यथासिद्धनियत-पूर्व्ववर्त्तित्वं कारणत्वमित्यन्ये। तन्न। ईश्वर-तद्बुद्ध्या-दीनामसंग्रहात् तद्व्यतिरेकस्य तत्समवधानव्यतिरेकस्य वा अभावात्। कार्य्यस्यान्यथानुपपद्यमानताव्यवस्था-

पन्नानुपपत्त्यभावात् तदनुपपत्त्याऽपूर्व्वं न कल्प्येतेति वक्ष्यमाणत्वात्। न च चिरध्वस्तकारणं व्यापारव्याप्तमितिव्याप्तेस्तथापूर्व्वकल्पनं न द्व्यणुकेरिति वाच्यम्। तथापि व्याप्तावप्रयोजकत्वशङ्कायां अव्यव-धानगर्भकारणताया एव विपक्षबाधकमत्वेनोक्तपर्य्यन्तस्यावश्यकत्वात्। न चापूर्व्वकल्पनेऽपि यागस्य स्वर्गाव्यवहितपूर्व्ववर्त्तित्वारचणात् कथ-मुक्तयुक्त्याऽपूर्व्वकल्पनमिति वाच्यम्। स्वसिद्धिविरोधिक्षणानन्तरित-स्वाव्यवधानपदेन विवक्षिततया अपूर्व्वकल्पनया यागाधिकरणका-

(१) पूर्व्ववर्त्तित्वेऽवगत इति ख०।

यत्वं वा अनन्यथासिद्धत्वम्। नन्वेवमतिरिक्तशक्तौ साधक-बाधकप्रमाणाभावान्नित्यं संशयः। न च साधकाभावस्य बाधकत्वम्। बाधकाभावस्यापि साधकत्वादिति चेत्। न। साधकाभावेन वह्न्यावन्यत्र सिद्धातीन्द्रियधर्माभावसाधने लाघवं बाधकाभावेनातीन्द्रियधर्मसाधने च गौरवमिति साधकाभावात्तदभाव एव सिध्यतीति। परमप्रयोजनमनुमानस्यापवर्गः "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यः" इति श्रुतेः, स च समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसः। ननु नासौ पुरुषार्थः अतीतदुःखध्वंसस्य सिद्धत्वात् अनागतदुःखस्य ध्वंसयितुमशक्यत्वात् वर्त्तमानस्य पुरुषप्रयत्नं विनैव विरोधिगुणनाश्यत्वात् अतीतदुःखवत् हेतूच्छेदे पुरुषव्यापारः प्रायश्चित्तवदिति चेत्। न। तत्किं हेतूच्छेदस्य

---

तस्यापि स्वर्गाव्यवहितत्वात् स्वजनकाधिकरणत्वानधिकरणत्वाभ्यामेव रूपाभ्यां कार्य्यभिन्नानुकूलत्वाननुकूलत्वात्। यदा यत्र घटाधिकरणत्वं तत्र दण्डाधिकरणत्वोत्तरत्वमिति नियमे उत्तरत्वस्य पूर्वत्वनिरूप्यत्वात् पूर्वत्वस्य नियमः एवं अव्यवहितपदमधिकं प्रयोज्यं प्राग-ध्वंसादिनियतत्वपदाऽसङ्ग्रहाभावात्, तत्प्रक्षेपप्रयोजनन्तु उभयक्रमेणापूर्वकल्पनादिरेव। न च यत्र स्वर्गाधिकरणत्वं तत्र यागाधिकरणाव्यव-

सुख-दुःखाभावेतरत्वेन स्वतोऽपुरुषार्थत्वादनागतानुत्पादमुद्दिश्य क्रियमाणत्वाच्च। यथा तत्र दुःखानुत्पादः पुरुषार्थस्तथेहापीति विवक्षितम्। अथानुत्पादस्य प्रागभावत्वेनासाध्यत्वात् फलान्तरस्याभावाच्चानन्यगतिकतया कण्टकनाशवत् दुःखसाधननाश एव स्वतः पुरुषार्थस्तथेहापीति वा उभयथापि दुःखध्वंसस्यापुरुषार्थत्वमेव। न च तयोरपि पुरुषार्थत्वमिति वक्ष्यते। मैवम्। दुःखान्तरध्वंसस्यायत्नसाध्यत्वेऽपि तादृशदुःखध्वंसस्य मिथ्याज्ञानोच्छेदद्वारा पुरुषप्रयत्नाधीनतत्त्वज्ञानसाध्यत्वात्, तथाहि तत्त्वज्ञानात्सवासनमिथ्याज्ञानाभावे दोषानुत्पत्तौ प्रवृत्त्यभावेऽदृष्टानुत्पत्तौ जन्माभावे तादृशदुःखध्वंसो भवति। अथ चरमदुःखे उत्पन्ने तद्ध्वंसस्तज्ज्ञानादेव भविष्यति तदनुत्पादे च तत्त्वज्ञानादपि न स्यादिति चेत्। न। प्रतियोगिवत्तत्त्वज्ञानस्यापि तद्धेतुत्वात्तुल्यवदुभयोरपि कारणत्वात्

---

हितोत्तरक्षणत्वमित्यसम्भवात्तदप्रवेशः स्वाङ्गमव्यवधायकमिति न्यायेन तथा नियमात्, अत एव तथा नियमरक्षार्थमपूर्वकल्पनं। न चैवं तत्र ध्वंसस्यापि स्वाङ्गतया तेनापि तथाभूतनियमनिर्वाहादपूर्वकल्पनं, तेन तथा नियमनिर्वाहेऽपि विरोधान्तरेण तत्कल्पनायां यागस्थानस्याभिद्धसमविरोधेन तत्परोहरादिरपूर्वं

तेन विना तदनुत्पत्तेः। अत एव शुकस्य तत्त्वज्ञानमुत्पन्नमिति तस्य तद्ध्वंस उत्पन्नो नास्मदादीनाम्। तत्र दुःखं नोत्पन्नमस्ति तेन स ध्वंसो नास्मदादीनामिति चेत्, अनादौ संसारे तत्कुतो नोत्पन्नम्, स्वकारणाभावादिति चेत्। न। अन्वय-व्यतिरेकानुविधायिनस्तत्त्वज्ञानादन्यस्यान्विष्यमाणस्याभावात्। मुक्तौ स ध्वंसोऽस्त्येव तस्मिन् सति मुक्तिरस्त्येवेति स मुक्त्युत्पादकोत्पाद्य इति सर्वाभ्युपगतम् मुक्तिः सा अन्या वा। नन्वेवं ध्वंसार्थं दुःखमुपादेयं तदनुत्पाद्य ध्वंसानुत्पादादिति चेत्, सत्यम्, पुरुषार्थहेतुत्वेन लोके दुःख-तत्साधनयोरपि उपादानदर्शनात् अनागतकुम्भनाशार्थं मुद्गरादौ प्रवृत्तिदर्शनादनागतदुःखध्वंसार्थमपि प्रवृत्तिः। चरमदुःखध्वंसो न दुःखध्वंसत्वेनोद्देश्यः(१) अयत्नसिद्ध-

वक्ष्यते। वस्तुतस्तु नियमस्तत्समवधाननियमः तत्समवधानन्तु तत्समवधानविरोध्यभावः तद्विरोधी च प्रकृते तत्सम्बन्धाभाव इति तत्त्वं। अत एव कुलालपितापन्यथासिद्धत्वेन वारणीयोऽन्यथा कुलालेन व्यवहितत्वादव्यवहितपूर्ववर्त्तित्वेनैव तन्निरासे तद्वारणायान्यथासिद्धिर्न स्वीक्रियेत। वस्तुतस्तु उभयथापि नियमो यदा कार्य्याव्यवहितपूर्वक्षणस्तदा दण्डो यदा घटस्तदा दण्डाधिकरण-

(१) चरमदुःखध्वंसो नोद्देश्य इति क०।

दुःखान्तरध्वंसवदपुरुषार्थत्वादिति चेत्। न। समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसत्वेन तस्योद्देश्यत्वात् दुःखासम्भिन्नसुखवत् तस्य च पुरुषप्रयत्नसाध्यत्वमेवेत्युक्तम्। एतेन दुःखध्वंसत्वमेव मोक्षत्वम् तत्तदात्मयावद्दुःखध्वंससम्बलनदशायान्तु तथा व्यपदेशः प्रतिपुरुषं दुःखध्वंसस्तोमस्य व्यक्तिस्थानीयत्वात् तेनाभावे सम्बलिते अन्यतमसपदप्रयोगवत् यथा सम्वलित एव द्वाविति बुद्धि-व्यपदेशौ प्रवृत्तिरपि सम्बलनार्थमित्यपास्तम्। मिलितानामसाध्यत्वात् मेलकस्यानतिरिक्तत्वेऽतिप्रसङ्गात् अतिरिक्तत्वे जन्यस्य ध्वंसावृत्तेः अजन्यस्य पुरुषार्थत्वक्षतेः अन्यतमसादौ तथा सम्बल एव प्रयोगात्। एतेन संस्काराजनकभोगविषयदुःखध्वंसः संस्काराजनकानुभवभवध्वंसो वा मुक्तिः, न चातिव्याप्तिः, जनकत्वस्याजनयत्यपि भावादिति निरस्तम्। अपुरुषार्थत्वात्।

---

क्षणोक्तलक्षण इति ग्राह्यः कालिकव्याप्तेश्च तथैव पर्यवसानात्, नियमोऽव्यवहितभावस्तथा च कार्य्यपूर्वक्षणे यस्यापर्यवसानमित्यन्ये। पूर्ववर्त्तित्वञ्च प्रागभावावच्छिन्नसमयवृत्तित्वं प्रागभावस्य विशेषणं येन प्रागभावेऽतिव्याप्तिः किन्तु तदुपलक्षितकालविशेषवृत्तित्वं कालस्य च स्थूलस्य हेतुत्वं अधिकरणतायामत्वेव सम्भवात् अधिकरणत्वेनैव

अन्ये तु दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मोक्षः लोकेऽहिकण्टकादिनाशस्य वैदिके प्रायश्चित्तादौ पापनाशस्यानन्यगतिकतया दुःखसाधनध्वंसत्वेन पुरुषार्थत्वात्। अथाहिकण्टकादि पापं वा नाश्यताम् तेन तज्जन्यं दुःखं न भवतीति दुःखानुत्पादमुद्दिश्य प्रवृत्तेर्दुःखानुत्पाद एव प्रयोजनम् न तु दुःखसाधनाभावः सुख-दुःखाभावेतरत्वादिति चेत्। न। दुःखानुत्पादस्य प्रागभावत्वेनानादितया असाध्यत्वात्। न च तत्पालनं साध्यम् पालनं हि न तत्स्वरूपं तस्यासाध्यत्वात्। नोत्तरसमयसम्बन्धः अभावे सम्बन्धिद्वयातिरिक्तस्य तस्याप्रामाणिकत्वात् अनभ्युपगमाच्च। नापि सम्बन्धिद्वयस्वरूपं साध्यम्, प्रागभावस्यापि असाध्यत्वात् समय-तदुपाध्योश्च प्रयत्नं विनैव सिद्धेः।

---

तस्य जनकत्वात् क्षणस्य चापूर्ववर्त्तित्वात् तस्य च तादृशक्षणवृत्तित्वमस्त्येव। प्रागभावस्य न प्रतिजनकोऽन्योन्याश्रयात्, नापि विनाशाभावे विनाशस्य प्रागभावगर्भतयाऽन्योन्याश्रयादुत्पत्तिगर्भतया तन्निर्वचने चोत्पत्तेः स्वसमानकालीनपदार्थप्रतियोगिकध्वंसासमानाधारसमयसम्बन्धरूपत्वेऽन्योन्याश्रयात्। नापि प्रतियोग्यन्यूनानतिरिक्तकालीनावधिकसामयिकं यावत् पदार्थासमानकालीनत्वादित्वाभावस्तया तन्निर्वचनं प्रलयकालीनपरमाणुक्रियाप्रागभावाद-

अथ दुःखे द्वेषाद्यथा तदभावे इच्छा तथा दुःखसाधने द्वेषात् तदभावेऽपि इच्छा तथा तत्साधने प्रवृत्तिरिति चेत्। न। यदिच्छया यत्साधने यस्य प्रवृत्तिस्तस्यैव त-

---

ध्याप्यापत्तेः किन्तु गन्धानाधारसमयानाधाराभावः। न च तादृशसमयाप्रसिद्धिः, गन्धवत्त्वं स्वाधिकरणानधिकरणसमयवृत्ति कादाचित्कमात्रवृत्तिजातित्वात् चैत्ररूपवदित्यनुमानात् तत्सिद्धेरिति। अत्र वदन्ति भवतु यथा कथञ्चिदेवं गन्धानाधारसमयसिद्धिस्तदनधिकरणत्वं प्रागभावस्य कथं ग्राह्यं, न हि तत्र प्रत्यक्षमागमो वा सम्भवति, अनुमानन्तु सम्भवेत् तत्सिद्ध्युत्तरं तथा चानुमानप्रवृत्तौ प्रागभावत्वेन धीस्तस्याश्चानुमानप्रवृत्तिरित्यन्योऽन्याश्रयः। किञ्चोक्तं यदि प्रागभावत्वं तदा गन्धानाधारसमयो नास्तीति अवधारितमतो मीमांसकादेर्घटो भविष्यतीति प्रत्ययानुदयापत्तेः विद्यमानप्रागभावप्रतियोगित्वस्यैव भविष्यत्त्वात्। अपि च यद्युक्तप्रागभावावच्छिन्नसमयसत्त्वं हेतुत्वं तदा ध्वंसस्याहेतुकतापत्तेः तत्प्रागभावो हि प्रतियोगी तत्प्रागभावो वा, आद्ये अभावपदवैयर्थ्यं गन्धानाधारसमयानाधारमात्रस्य प्रागभावतया व्यावर्त्याभावात्, अन्त्ये ध्वंसजनकस्य प्रतियोगिप्रागभावावच्छिन्नेऽसत्त्वात्। न हि प्रतियोग्यपि घटप्रागभावावच्छिन्नसमये। किञ्च गन्धानाधारत्वगर्भवत् नीलाद्यनाधारतागर्भतयापि तन्निर्वचनात् तद्धर्मकारणत्वमपि भिद्येत तथा च विनिगमनाभावादुभयगर्भसाधारणत्वज्ञानप्रवर्त्तकतायां प्रवृत्त्यननुगमः। अपि च गन्धानाधारसमयस्य महाप्रलयकालत्वे

प्रयोजनत्वमिति दुःखसाधनाभावस्यैव प्रयोजनत्वात्। अथ चिकीर्षायोनिप्रयत्ने प्रयोजनज्ञानापेक्षा तेन विनोपाये चिकीर्षाविरहात्, न तु द्वेषयोनियत्ने

---

मानाभावः युगपन्नाशे मानाभावात् तस्य च यावद्ध्वंसप्रागनन्तर-क्षणान्तरसत्त्वसम्भावनया तत्प्रागभावस्य ध्वंसानाधारसमयानाधार-त्वसंशयेन तत्कारणेऽपि तद्धर्मकारणलक्षणाव्याप्तिसन्देहः एवञ्च सर्व-विशेषणत्वासन्देहात् तदारणविशेषणदानमप्यशक्यमित्यादि। अत्र ब्रूमः, आकाशपदाच्छब्दाश्रयत्वाद्युपलक्षिताकाशपदार्थोपस्थितिवद्ध्वंसानाधारत्वेन समयोपाधिविशेषोपलक्षितस्य प्रतीतिः, तथाच तत्समयविशेषाणामधिकरणाभावत्वं इदमपि सर्वथामनुगमकं न तु घटो भविष्यतीत्यादिप्रत्ययविषयोऽयमुपाधिरनायुगैरननुभवाच्च, कि-न्तूत्तरसमयासन्नघटाभाव इदानीमित्येव घटो भविष्यतीति विषयः। न चोत्तरत्वस्य ध्वंसगर्भतया अन्योन्याश्रयः, उत्तरत्वेन समय-विशेषस्थितस्यैव प्रत्ययविषयत्वात्, अथोत्तरत्वधीश्च उत्तरकालिकी अनुभवाय एवञ्चानुगते विनाशाभावविद्यमानतयैव भविष्यत्ता विनाशित्वेन च तज्ज्ञानात् नान्योन्याश्रयः, किन्तु वस्तुतो विनाश्य-स्येदानीं नास्तीति ज्ञानं, एवञ्चाकाशपदात् कदाचिच्छब्दाश्रयत्वेन कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्वेनेतिवत् कदाचित्तौलाद्यनधिकरणत्वे-नापि समयोपलक्षणात् न कापि क्षतिः। तत्समयविशेषप्रागभावाभा-वावच्छिन्नसमयसत्त्वस्यैव हेतुतया न च प्रत्यक्षाननुगमः, न ह्याकाश-पदाच्छिन्नतयोपलक्षणोपस्थितिः, तस्य तच्छून्यतापत्तेः। अत एव च

**अनिष्टसाधनताज्ञानादहिकण्टकादौ द्वेष्ये द्वेषात् तन्नाशानुकूलो यत्न उत्पद्यते, अयमेव हि द्वेषस्वभावो**

---

तत्समयानाधारत्वमपि सुग्रहं पूर्वकालिकतत्समयविशेषसत्त्वे सतीदानीमसत्त्वेन ध्वंसानाधारसमयानाधारत्वेनानुमानात्। न च दुर्ग्राह्यदुर्भिक्षं, ध्वंसस्यैव तथात्वाभावात्। एवञ्च समयविशेषानाधारत्वप्रतियोगिकाभावावच्छिन्नसमयवृत्तित्वं स्वहेतुत्वमिति निर्गलितं। अत एव तत्प्रतियोगिकाभावत्वाभावाभावपदमप्युपात्तं, अन्यथा व्यावर्त्त्याभावे तन्नोपादीयेत तदुपादाने च घटप्रागभावेन पटप्रागभावातिव्याप्तिः प्रसज्यते।

यत्तु युगपन्नाशे मानाभावाद्ध्वंसानाधारसमयस्य सर्वमुक्तित्वे मानाभाव इति, तन्न, यावद्ध्वंसनाशेऽदृष्टाभावात्, अन्यथा संयोगविभागयोरन्योन्यनाश्यतयाऽवस्थितौ सर्वमुक्त्यनुपपत्तेः, तथाच दृष्टाभावादारकार्य्याभावो वाच्य इति युगपदेव सर्वनाशः। वस्तुतस्तु स्वरूपसम्बन्धविशेषः कारणता प्रतियोगिवत् तावत्परिचायक एव धर्मविशेष इत्युक्तमिति न काप्यनुपपत्तिः। भवदुक्तरूपा कारणता वा जन्मान्तरसंस्कारादेव स्तनपानात् प्रवृत्तौ क्वेति शिशुष्वेव स्मरणात् क्वान्योन्याश्रयादिरित्यपि वदन्ति। ननु कारणत्वादन्येन प्रकारेण सिद्धभावोऽन्यथासिद्धिरित्यन्योन्याश्रयः सिद्धिपदस्य चोत्पत्तिपरतया नित्यभावेऽतिव्याप्तिः ज्ञप्तिपरत्वेऽसम्भवः हेतोरपि प्रमेयत्वादिना ज्ञानात् इति योगार्थमपहाय रूढमन्यथासिद्धिपदार्थमाह, 'अन्यथेति। यद्यपि पञ्चधान्यथासिद्धिः ग्रन्थान्तरे निबद्धाऽस्ति सम्भवति च तथावच्छेदक-जनकजनकयोस्तिसृभिरसङ्ग्रहात्। न च

यत्प्रतिबन्धकं विना स्वविषयनाशानुकूलं यत्नमुत्पादयति अन्यथा प्रयत्नद्वैविध्यानुपपत्तेः । अत एव फलं

---

'येन सहेत्यनेन दण्डरूपवद्दण्डत्वमपि संगृहीतमिति वाच्यम् । तत्र हि साहित्यप्रतियोगिना दण्डेनान्वयात् इति प्रतियोगिरूपमन्यथासिद्धमित्यर्थः, प्रकृते च साहित्यप्रतियोगिदण्डत्वमेवावच्छेदकं दण्डेनान्यथासिद्धं इति महान् भेदः, तथाप्यवच्छेदक-जनक-जनकयोर्विशेषभिरेव सङ्ग्रहाददोषः । 'येनेति येनान्वय-व्यतिरेकवता सह यस्य पूर्ववर्त्तित्वं गृह्यते तेनान्वयादिमता तत्पूर्ववर्त्त्यन्यथासिद्धमित्यर्थः, पृथगित्यादिविशेषणपूरणात् नावच्छेदकदण्डत्वादिना दण्डादिरन्यथासिद्ध इति भावः । अथापृथगन्वयादिमत इत्यपि यस्येति विशेषणं पूरणीयं, तेन दण्डो न दण्डसंयोगेनान्यथासिद्ध इति ध्येयं । एवं विशेषणद्वयमहिम्नैव यत्रोभयविशेषणावच्छेदेनेनान्वयाद्यनुविधानं तत्रैकेनापरस्यान्यथासिद्धिर्यथोद्भूत-तेजसोः । न चैवमपि तदद्विनिगमकाभावात् द्रव्यत्व-दण्डत्वयोरपि नैकेनापरस्यान्यथासिद्धिः, द्रव्यत्वस्य चक्रभ्रमिजनकत्वस्यान्वयाद्यनुविधानाभावादिति दिक् । 'अन्यं प्रतीति, न चैवमाकाशस्य स्वसंयोगं प्रति अन्यथासिद्धिः, शब्दपूर्ववर्त्तितामग्रहात्मनापि द्रव्यत्वेन तत्पूर्वभावग्रहात् । न च द्रव्यत्वेनैवाकाशस्य ज्ञानहेतुतापत्तिः, ग्राहकाभावेन नियतपूर्ववर्त्तिताग्रहादग्रिमप्रवेशाच्च ।

यत्तु यं प्रति पूर्ववर्त्तित्वे गृहीत एव तत्पूर्ववर्त्तित्वानुपपादकं यस्य पूर्ववर्त्तित्वं गृह्यत इत्यवश्यं वाच्यम् अन्यथा स्पर्शेन ग्राणान्यथासिद्ध्यापत्तेः तथाच शब्दपूर्ववर्त्तित्वग्रहेऽपि न संयोगान्यथा-

**विनैवोत्कटक्रोधान्धानां आत्मघाते प्रवृत्तिरिति चेत्। न। प्रयोजनमनुद्दिश्य द्वेषमात्रात् दुःखैकफलके**

---

सिद्धिरिति। तन्न। विभागद्वित्वादावेवमप्युक्तप्रकारानुसरणात्। अत एव दिक्कालादावपि परत्वादिनान्यथासिद्धौ कार्य्यमात्रे आधारत्वेन तत्पूर्ववर्त्तिताग्रहात्।

वस्तुतस्त्वन्यमित्यस्य यमित्यर्थः, तेन यं प्रति पूर्ववर्त्तित्वे गृहीत एव इत्यर्थः। न च परत्वादि तथा, अन्यपूर्ववर्त्तित्वग्रहेऽपि सम्भवे नियमाभावात्। अत एव कुम्भकारपिता अन्यथासिद्धौ प्रविशति, चैत्रत्वादिनापि रूपेण कुम्भकारजनकत्वं ज्ञात्वैव घटं प्रत्यन्यथादिग्रहात् घटोत्पत्तौ तस्य साक्षात्समवधानेन कुम्भकारद्वारैव समवधाननियमादवश्यमन्यपूर्ववर्त्तिताग्रहपूर्वकस्यैव घटपूर्ववर्त्तिताग्रहस्य सम्भवात्। न हि पूर्ववर्त्तितामात्रं हेतुत्वं, वेमजातीयस्यापि घटपूर्ववर्त्तितया हेतुत्वापातात्, किन्तु नियतपूर्ववर्त्तित्वं नियतपूर्वसमवधानरूपं[1]। न च कुलालपितृत्वमज्ञात्वा कुलालपितुः समवधानं घटोत्पत्तौ अशक्यग्रहं, तदानीं तस्य समवधाननियमात्। अत एव चक्रभ्रमिजनकदण्डत्वेन हेतुत्वेऽपि न दण्डो अन्यथासिद्धः तद्ग्रहावस्थाने दण्डत्वेनापि पूर्वसत्त्वग्रहसम्भवानियमाद्युगपदेव चक्रभ्रमि-दण्डयोः पूर्ववर्त्तित्वग्रह इत्यनुपदमाकर एव स्फुटत्वादिति।

'अन्यथेति पृथगन्वयाद्यनुविधायित्वे सति लघुनियतपूर्ववर्त्तिसमवधाननियत इत्यर्थः, तेन लाघवात् प्रथमोपस्थितत्वाच्च लघु-

---

(१) कार्य्याव्यवहितप्राक्क्षणावच्छिन्नकार्य्यसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपमित्यर्थः।

प्रेक्षावतां प्रयत्नानुत्पादात् क्रोधान्धानामपि तात्कालिकः फलाभिमानोऽस्त्येव उत्कटरागान्धानामिव पर-

---

यत्नादिनियतपूर्ववर्त्तिना तद्व्याप्यस्यानेकद्रव्यस्यान्यथासिद्धावन्यथेत्यभावाद्व्याप्तिः, 'पूर्ववर्त्तिन' इति पञ्चम्या हेतुत्वप्रतिपादनात् हेतुत्वघटेऽन्यथासिद्धत्वस्य घटः तद्घटे च तदभावगर्भहेतुत्वघट इत्यन्योन्याश्रयः यागस्याप्येवमन्यथासिद्धत्वेऽन्यथासिद्धिपदादेव तत्कारणे तत्कारणाय नियतपदोपादानस्य व्यर्थमित्यादीनि दूषणानि प्रसक्तानि भवन्ति। अत एव दण्डत्वादेरपि न पृथगन्यथासिद्धिरुक्तैव संपन्नादत एतावच्छेदकीभूतौ दण्डसंयोगादौ दण्डेनान्यथासिद्धिः। नन्वेवमिन्द्रियसंयोगादावपि इन्द्रियमन्यथासिद्धं स्यादिति चेत्,न, लघुपदेन निरासात् लाघवस्य वस्तुविवेचनया प्रथमोपस्थितत्या च उभयथाप्यभावात् इन्द्रियपूर्ववर्त्तितायास्तस्य ग्राह्यत्वादिति दिक्।

यत्तु प्रतियोगिजन्ये ध्वंसस्यान्यथासिद्धिस्तुरीयेति(१)। तन्न। पूर्व्वादिनैव तदन्यथासिद्धेरनाक्रमेण सम्भवात्। न च वैपरीत्यं, विरोधस्योक्तत्वात् अपूर्व्वे वक्ष्यमाणत्वाच्च। ननु यागापूर्व्वयोर्युगपदन्वयानुविधानमस्ति अस्ति च अन्यस्य लघुनि स्थितत्वमिति यागस्यान्यथासिद्धत्वं स्यादित्याह, 'यागेति, प्रथमोपस्थितत्वेन यागस्यैव पूर्ववर्त्तित्वग्रहात् न च युगपत्तदाह, 'न त्ववगम्यमान' इति। न चापूर्वमेवान्यथासिद्धमस्तु, पृथगन्वयाद्यनुविधानादिति। नन्वेवं कुलालेन स्वपितापि नान्यथासिद्धः स्यादित्यत आह, 'यत्रेति, तत्र क्लृप्तपूर्ववर्त्तिनियततया अन्यत्र पूर्ववर्त्तिताग्रहनियतपूर्ववर्त्तितया

---

(१) चतुर्थान्यथासिद्धिरित्यर्थः।

दारादावपि प्रवृत्ताविति। तन्न। दुःखं मे मा भूदित्युद्दिश्य प्रायश्चित्तादौ प्रवृत्तेर्दुःखानुत्पादस्यैव प्रयोजनत्वात्। न च प्रागभावस्यासाध्यत्वम्, दुःखसाधनविघ-

टनेन तदुत्पत्तिप्रतिबन्धाद्द्वारा तस्य साध्यत्वात्।

---

टोभयथा सिद्धत्वादिति भावः। 'यद्येति, तत्र शरीरोत्पन्नस्य पृथगन्वयाद्यनुविधानेनोक्तायाः अन्यथा वा अन्यथासिद्धेरसिद्धेरिति भावः। नन्वेवं चक्रभ्रमिजनकदण्डस्यापि कुलालवदन्यथासिद्धत्वमत आह, 'दण्डेति, तत्र द्वयोरपि समवधानसम्भवेन स्वातन्त्र्येणापि नियतपूर्ववर्त्तितायाः इत्यवधारणसम्भवात्, 'साधकाभावेनेति। यद्यपि प्रमाणेन यत्र लघु-गुरुविषयतानियमस्तत्रैव लाघवं सहकारि, न त्वेकस्य लघुविषयतासम्भवोऽन्यस्य गुरुविषयकस्य प्रमितिजननविरोधी, गुरुमात्रस्यासिद्धिप्रसङ्गात् विषयान्तरे मानान्तरे लाघवावतारस्य सर्वत्र सुलभत्वात् इति। नैवं। यत्रैकत्वसिद्धिरपरासत्त्वे विरोधिनी तत्रैव लाघवावतारस्य गुरुसिद्धिप्रतिबन्धकत्वात्, न च गौरवावतारो भिन्नयोरेकस्य वा इत्यत्राविशेषादिति सङ्क्षेपः(१)।

प्रसङ्गसङ्गतिमवतारयति, 'परमेति, ब्रह्मर्षिप्रवृत्त्यादिकमप्यनुमानाद् भवतीति, 'परमेति, यद्यपि श्रुतिर्न साक्षान्मोक्षहेतुतामाह, तथापि "दुःखेनात्यन्तं विमुक्तश्चरतीत्याद्यनुवादसमभिव्याहृतश्रुतेः ज्ञानद्वारा मोक्षजनकतेति भावः। साक्षात्कर्त्तव्य इत्याद्याकारश्रुतिरर्थपरतया निर्दिष्टा, "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवमाकारिकैव श्रुतिः, अस्या अर्थः मुमुक्षुणा आत्मा द्रष्टव्यः मुमुक्षोरात्मदर्शनमिष्टसाधनमिति यावत्। आत्मदर्शनोपायः

---

(१) एतत्सन्दर्भादर्शपुस्तकयोरेकस्मिन् पुस्तके यत्नेन समाहितः खण्डशः पठ्यते।

टनद्वारा तस्यापि कृतिसाध्यत्वात्। दुःखसाधनसमव-धानदशायां कृतौ सत्यां दुःखसाधननाशे सत्यग्रिम-

क इत्याह, 'श्रोतव्य इत्यादि, तेनार्थक्रमेण शब्दक्रमस्त्याज्यो भवति 'अग्निहोत्रं जुहोति यवागूं पचतीत्यादिवत् तथाच श्रवण-मनन-निदिध्यासनानि आत्मसाक्षात्कारजनकानीत्युक्तं भवति। अत एव श्रुतेरपेक्षाकार इति भ्रमो न कर्त्तव्यः। 'समानेति, इदानीन्तन-दुःखध्वंसातिव्याप्तिवारणाय तादृशं विशेषणं, इदानीन्तनस्य तत्स-मानकालीनत्वात्, तावन्मात्रे च कृते इदानीन्तनमुक्तनरकादि-दुःखध्वंसस्यापि चरमदुःखप्रागभावसमानकालत्वात् अतो दुःख-ध्वंससमानाधिकरणत्वेन दुःखप्रागभावो विशेषितः। न चैवम-प्युपात्तदुःखध्वंसे अतिव्याप्तिः, स च दुःखध्वंसो भोगेन स च विशिष्टज्ञानवद्विशेषणज्ञानसापेक्ष इतीष्टज्ञानस्यैव दुःखनाशात् भोगेन दुःखनाशेऽपि दुःखान्तरस्य विषयज्ञानादिविलम्बेनोपात्त-दुःखध्वंसानन्तरमेव चरमदुःखनिवृत्तेः। वस्तुतस्तु दुःखप्रागभावा-सहवृत्तित्वं दुःखविशेषणं न ध्वंसविशेषणं अतो नातिव्याप्तिरग्रिम-दुःखप्रागभावसमानकालत्वादुपात्तस्येति अतो दुःखध्वंसो न मुक्त-स्तत्रातीतादावभावेन विकल्पासम्भवादित्यवधेयम्[१]।

इति महामहोपाध्याय-पक्षधरमिश्र-श्रीजयदेवविरचित ईश्वरानु-मानालोकः समाप्तः।

(१) अस्मत्प्राप्तादर्शपुस्तकद्वये 'ननु मानौ पुरुषार्थः अतीतदुःखध्वंसस्य सिद्धत्वात्' इत्यादिमूलभागस्य व्याख्यानादर्शनात् समाप्तिसूचकवाक्य-दर्शनाच्च तावत्पर्यन्तेन तादृशमूलभागस्य व्याख्याप्रयासः आलोककृता न कृत इति वयं मन्यामहे अवशिष्टमूलभागो व्याख्यारहित एवात्र मुद्रितपुस्तके सन्निवेशित इति।

समये प्रागभावस्वरूपमस्ति तेन विना नास्तीत्यन्वय-व्यतिरेकयोस्तत्र सत्त्वात्। घटेऽपि कृतौ सत्यामग्रिमक्षणे तत्सत्त्वं तया विना नेत्येव कृतिसाध्यत्वम् न तु प्रागसतोऽग्रिमक्षणे सत्त्वमुत्पत्तिः गौरवात्। कृतिं विना न यत्स्वरूपं तत्कृतिसाध्यं प्रागभावस्वरूपन्तु न तथेति चेत्। न। कृतिध्वंसेऽपि घटसत्त्वेनाग्रिमक्षण इत्यावश्यकत्वात्। अत एव योगवत्क्षेमस्याप्यनागतानिष्टानुत्पादजनकस्य परीक्षकप्रवृत्तिविषयत्वमिति वक्ष्यते निषेधापूर्वप्रस्तावे। ननु प्रायश्चित्तनाश्यपापजन्यदुःखस्य प्रागभावो यद्यस्ति तदा दुःखमावश्यकम् तस्य प्रतियोगिजनकत्वनियमात् नास्ति चेत् तर्हि तदभावादेव दुःखानुत्पाद इत्युभयथापि प्रायश्चित्तमफलम्, तस्माद् दुःखसाधनध्वंससुखेन प्रागभावस्य साध्यतेति तत्रैव कृतिसाध्यत्वपर्यवसानाद् दुःखसाधनध्वंस एव पुरुषार्थो न तु दुःखानुत्पादार्थितयेति तत्र प्रागभावसत्त्वासत्त्वविचारो वायसदशनविचारवत्। अथ तदापि प्रागभावस्यासत्त्वे तदभावात् पापं न दुःखसाधनमिति तन्नाशार्थं प्रवर्त्तेत तस्य सत्त्वे च पापमादायैव तस्य दुःखोत्पादकत्वनियमात् प्रायश्चित्ते सत्यपि गङ्गे मादृक्या पापा-

वस्थानमिति न ततः पापनाश इति चेत्। न। प्रागभावस्यासत्त्वेऽपि दुःखसाधनजातीयनाशस्य पुरुषार्थत्वात् सत्त्वेऽपि पापान्तरमादायापि तस्य दुःखजनकत्वसम्भवात्। प्रायश्चित्तात्पापनाशः स्यादेवेति प्रागभावसत्त्वासत्त्वसन्देहेऽपि प्रायश्चित्तादौ प्रवृत्तिरप्युपेयैवेति। उच्यते। तत्र दुःखप्रागभावोऽस्त्येव तस्यैव दुःखानुत्पादरूपत्वेन पुरुषार्थत्वात्। स च पापनाशद्वारा प्रायश्चित्तसाध्य इति प्रागभावसत्त्वेऽपि न निष्फलं प्रायश्चित्तम्। तेन प्रागभावेन दुःखमवश्यं जननीयमिति चेत् सत्यम् किन्तु पापान्तरमासाद्य। न चैवं प्रायश्चित्तमफलम्, दुःखानुत्पादेन तस्य सफलत्वात्। न च दुःखानुत्पादस्यापि दुःखानुत्पादान्तरमेव फलम् तच्च तत्र नास्तीत्यफलत्वम्, स्वरूपसत एव तस्य पुरुषार्थत्वात् अनवस्थानाच्च। अतोऽनेन पापेन दुःखं मे मा भूदिति विद्यमानपापनाशार्थं[1] प्रायश्चित्ते प्रवृत्तिः। एतेन चीर्णप्रायश्चित्ते दुःखप्रागभावो नास्त्येव, अन्यथा तस्य प्रतियोगिनाश्यत्वेनानिर्मोक्षप्रसङ्गात्, न च प्रायश्चित्तवैफल्यं, न वा भगवतो दुःखमपकर्मोपदेशकत्वेनानाप्तत्वम्, तस्य पापध्वंस-

(१) समाप्तपापनाशार्थमिति क०।

नैव सफलत्वात् प्रागभावानिश्चयेऽपि नरकसाधनपापनिश्चयात् तन्नाशार्थं प्रवृत्तिरित्यपास्तम्। दुःखसाधनध्वंसस्य स्वतोऽपुरुषार्थत्वात्। पापान्तरेण तत्प्रतियोगिजनने तन्नाशात् तस्माद्दुःखं मे मा भूदित्युद्दिश्य तत्साधनध्वंसार्थं प्रवृत्तिरिति दुःखानुत्पाद एव पुरुषार्थो न तु दुःखसाधनध्वंस इति स्थितम्। अपि च न तावद् दुःखमयसंसारवीजमिथ्याज्ञानस्य ध्वंसो मुक्तिः तत्त्वज्ञानात् तन्नाशेऽपि शरीरधर्मादिसत्त्वदशायां मुक्तिप्रसङ्गात्। नापि शरीरेन्द्रियबुद्ध्यादि-तन्निदानधर्माधर्मध्वंसः, अचीर्णप्रायश्चित्तकर्मणां भोगैकनाश्यत्वेन तत्त्वज्ञानानाश्यत्वात् भोगद्वारा तन्नाशस्य चापुरुषार्थत्वादिति।

अपरे तु दुःखात्यन्ताभावो मुक्तिः, यद्यपि परदुःखात्यन्ताभावः स्वतः सिद्ध एव स्वदुःखात्यन्ताभावः स्वात्मन्यसम्भवी घटादावतिप्रसक्तोऽसाध्यश्च। तथापि दुःखसाधनध्वंस एव स्ववृत्तिदुःखात्यन्ताभावसम्बन्धः स च साध्य एव। न चैवमावश्यकत्वेन स एव मुक्तिः, तस्य स्वतोऽपुरुषार्थत्वेन दुःखाभावमुद्दिश्य तत्र प्रवृत्तेः "दुःखेनात्यन्तं विमुक्तश्चरतीत्यत्यन्ताभावत्वेन मुक्तिश्रवणाच्च। यद्यपि दुःखसाधनध्वंसो न पुरुषार्थो-

त्यन्ताभावश्च न साध्यस्तथापि विशिष्टस्य पुरुषार्थत्वं विशेषणसाध्यत्वेन विशिष्टसाध्यत्वञ्च। अहिकण्टकादिनाशस्यापि तत्तद्व्यक्तिसाध्यदुःखात्यन्ताभावमुद्दिश्य तत्सम्बन्धत्वेनैव साध्यतेति। तन्न। अधर्मादिदुःखसाधनध्वंसस्य न मुक्तिनिर्वाहकत्वं इत्युक्तत्वात्। किञ्च नानागतस्ववृत्तिदुःखस्यात्यन्ताभावसम्बन्धः साध्यः मुक्तस्यानागतस्ववृत्तिदुःखस्यानभ्युपगमात् अभ्युपगमे वा अमुक्तत्वापातात् अत्यन्ताभावसम्बन्धविरोधाच्च। नाप्युत्पन्नस्य स्ववृत्तिदुःखस्य, तद्वृत्तेस्तत्त्वात्यन्ताभावविरोधात् तदभावस्य स्वतःसिद्धत्वात् अतीतदुःखाभावस्यानुद्देश्यत्वाच्च। नापि परकीयदुःखस्यात्यन्ताभावसम्बन्धः, तस्य स्वतःसिद्धत्वात्। अपि च दुःखसाधनध्वंसस्य नात्यन्ताभावसम्बन्धत्वे मानमस्ति। दुःखसाधनध्वंसादावस्य दुःखस्यात्यन्ताभाव इति बुद्धि-व्यपदेशौ स्त इति चेत्। न। तस्य समानाधिकरणदुःखासमानकालदुःखाभावविषयत्वेनाप्युपपत्तौ अतिरिक्तसम्बन्धाविषयत्वात्। एतेन सर्वदुःखप्रागभावसंसर्गाभावो मुक्तिः घटादेश्च न मुक्तत्वम् दुःखसाधनध्वंसविशेषितैतद्योगिनो मुक्तपदार्थत्वात् तथैव व्यवहारात् योग-रूढिभ्यां पङ्कजादिपदवाच्यत्ववदिति निरस्तम्।

प्रागभावसंसर्गाभावस्य स्वतोऽनुद्देश्यत्वात् प्रत्युतात्यन्ताभावस्यासाध्यत्वेन ध्वंसरूपत्वेन तस्य दुःखरूपतया हेयत्वात्।

प्राभाकरास्तु आत्यन्तिकदुःखप्रागभावो मुक्तिः। न च तस्यानादित्वेन सिद्धत्वादपुरुषार्थत्वम्, कदाचित् क्षत्यनपेक्षत्वेऽपि प्रतियोगिजनकाधर्म्मनाशमुखेन तस्य क्षतिसाध्यत्वात् क्षत्यधीनतत्त्वज्ञानादधर्म्मनाशे सत्यग्रिमसमये दुःखप्रागभावस्वरूपमस्ति, तया विना अधर्म्मेण दुःखजननान्न तत्प्रागभावस्वरूपमस्तीति घटवत् क्षतिसाध्यत्वात्। व्यवस्थापितञ्च त्वया प्रागभावस्य क्षतिसाध्यत्वमहिकण्टकादिनाशप्रायश्चित्तक्षेमार्थिप्रवृत्तिस्थले। न चैवं युगपदधर्म्मध्वंस एव मुक्तिः प्रागभावस्यानादितया विवक्षितविवेकेन तत्रैव क्षतिसाध्यत्वपर्य्यवसानादिति वाच्यम्। अधर्म्मध्वंसस्य स्वतोऽपुरुषार्थत्वात्। दुःखानुत्पादहेतुत्वेनैव तस्य प्रयोजनता वाच्या सा च कथमसाध्यत्वे प्रागभावस्य स्यादिति। अतएव "दुःख-जन्मेत्यादिसूत्रमपि[1] संगच्छते। अन्यथा मिथ्याज्ञानाद्यनुत्पादानां दुःखानुत्पा-

(१) दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः इति न्यायसूत्रं।

दाहेतुत्वेनासङ्गतं स्यादित्याशिषपतेति। तदतिस्थवीयः तथा ह्यस्तु प्रागभावस्य साध्यत्वं तथापि तस्य प्रतियोगिजनकत्वनियमान्मुक्तस्यापि दुःखोत्पादप्रसङ्गः। अधर्म्म-शरीरादिसहकारिविरहान्न दुःखोत्पाद इति चेत्, तर्ह्युत्तरावधिविधुरत्वेनानादेरत्यन्ताभावत्वापत्तौ प्रागभावत्वव्याकोपः। प्रतियोगिजनकनाश्यजातीयत्वेन तत्र प्रागभावव्यपदेशोवस्तुतोनित्य एव स इति चेत्। न। नित्यत्वेनात्यन्ताभावरूपतया प्रागभावान्यत्वेन नाश्यजातीयत्वाभावात् प्रतियोगिजनकनाशमुखेन तस्यासाध्यत्वाच्च। अपि च मुक्तेः प्रागभावस्य समानाधिकरणं भावि दुःखं न प्रतियोगि तस्याभावात् भावे वा अमुक्तत्वापातात्। नापि समानाधिकरणमतीतं वर्त्तमानञ्च, तत्प्रागभावस्य विनष्टत्वात्। नापि व्यधिकरणम्, अन्यवृत्तिदुःखस्यान्यत्रात्यन्ताभावेन प्रागभावाभावात् तस्य प्रतियोगिसमानदेशत्वात्। न च दुःखमात्रं प्रतियोगि, स्वपरावृत्तेर्दुःखमात्रस्याप्रामाणिकत्वात् तस्यात्यन्तासतो नित्यनिवृत्तत्वेन तन्निवृत्तये प्रेक्षावत्प्रवृत्त्यनुपपत्तेः, अहिकण्टकादिनाश-प्रायश्चित्तादिसाध्यदुःखप्रागभावस्य कलञ्जभक्षणप्रागभावस्य च समानाधिकरणमेव भावि दुःखं

भक्षणञ्च प्रतियोगि। ननु दुःखाभावो न पुरुषार्थः सुखस्यापि हानेः तुल्यायव्ययत्वात्। न च बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वम्, आवश्यकत्वेन दुःखस्यैव हेयत्वात् सुखस्य निरुपधीच्छाविषयत्वात्। अन्यथा दुःखाननुविद्धतया तथात्वे पुरुषार्थत्वविरोधादिति चेत्। न। सुखमनुद्दिश्यापि दुःखभीरूणां दुःखहानार्थं प्रवृत्तिदर्शनात् दुःखाभावस्य स्वत एव पुरुषार्थत्वात्। न हि दुःखाभावदशायां सुखमस्तीत्युद्दिश्य दुःखहानार्थं प्रवर्त्तते[१]। वैपरीत्यस्यापि सम्भवे सुखस्याप्यपुरुषार्थत्वापत्तेः अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिप्रवृत्तिप्रतिबन्धकम् तस्मादविवेकिनः सुखमात्रलिप्सवो बहुतरदुःखानुविद्धमपि सुखमुद्दिश्य शिरो मदीयं यदि याति यास्यतीति कृत्वा[२] परदारादिषु प्रवर्त्तमाना वरं वृन्दावने रम्ये इत्यादिवदन्तो नाचाधिकारिणः, ये च विवेकिनोऽस्मिन् संसारकान्तारे[३] कियन्ति दुःखदुर्दिनानि कियती सुखखद्योतिकेति कु-

(१) दुःखाभावार्थं प्रवर्त्तन्ते इति ख॰।
(२) यदि याति यास्यतीति यात्वित्ति क॰। यदि याति यात्विति या॰।
(३) संसारापारकान्तारे इति ख॰।

यितफणिफणामण्डलच्छायाप्रतिममिदमिति[1] मन्यमानाः सुखमपि हातुमिच्छन्ति तेऽत्राधिकारिणः। न च भोगार्थिनामप्रवृत्तौ पुरुषार्थता हीयते, कस्यचिदप्रवृत्तावपि चिकित्सादेः पुरुषार्थत्वात्। अथ, दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते। न हि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः॥ पुरुषार्थत्वेन सुखवत् ज्ञायमानत्वनियमात्। न च मुक्तिज्ञानं सम्भवतीति चेत्। न हि दुःखाभावं जानीयामित्युद्दिश्य प्रवृत्तिः, किन्तु दुःखं मे मा भूदित्युद्दिश्येत्यतो दुःखस्याभाव एव पुरुषार्थः तस्य ज्ञानञ्च स्वकारणाधीनं, न तु पुरुषार्थतोपयोगि, सुखी स्यामित्युद्दिश्य प्रवर्त्तते, न तु सुखं जानीयामिति, सुखमेव तथा न तु तदवगमः तस्यावश्यकत्वेनान्यथासिद्धत्वात् गौरवाच्च। किञ्च बहुतरदुःखजर्जरकलेवरा दुःखाभावमुद्दिश्य मरणेऽपि प्रवर्त्तमाना दृश्यन्ते। न च मरणे तस्य ज्ञानमस्ति, न ते विवेकिन इति चेत्। न। पुरुषार्थत्वे विवेकानुपयोगात्। किञ्च चरमदुःखानुभवेऽनागत-

(१) अत्रायं भावः यथा सन्तापसन्तप्तः कश्चित् पुरुषो बहुमत्तफणप-फणाच्छायायां सन्तापशान्तिमिच्छति तथैवास्मिन् संसारे इतस्ततो-ऽवाप्तदुःखधाराग्निदग्धोऽयं कान्तासमुपभुक्तस्रक्चन्दनप्रमुखकाम-मानमुखमौत्पादिसदृशमसदृशी कालोऽवि।

दुःखध्वंसोऽपि विषयः, तथाचाग्रिमक्षणे तद्ध्वंसस्त-द्विषयकञ्च विनश्यदवस्थं ज्ञानमस्तीति वर्त्तमानाध्य-चिरमनुभूयते। ज्ञानसमये मुक्तिलक्षणस्य सत्त्वात् न ज्ञानं मुक्तिविरोधि। प्रमाणन्तु[1], दुःखत्वं देवदत्त-दुःखत्वं वा स्वाश्रयासमानकालीनध्वंसप्रतियोगि-वृत्ति[2] कार्य्यमात्रवृत्तिधर्म्मत्वात्[3] सन्ततित्वाद्वा एत-त्प्रदीपत्ववत्[4]। सन्ततित्वञ्च नानाकालीनकार्य्य-मात्रवृत्तिधर्म्मत्वम्[5]। एवं सुखत्वादावपि साध्यन्तेन

(१) प्रमाणन्तु मुक्ताविति क०।

(२) अत्र स्वपदं पक्षपरं।

(३) नित्यानित्यसाधारणगुणत्वादिकमादाय स्वाश्रयनित्यगुणासमानका-लीनध्वंसाप्रसिद्ध्या साध्याप्रसिद्धिवारणाय मात्रपदं।

(४) एतद्वर्त्त्यवच्छिन्नविभिन्नकालोत्पन्नशिखावृत्तिवैजात्यविशेषवदित्यर्थः।

(५) कार्य्यमात्रवृत्तिधर्म्मत्वमित्यत्र मात्रपदं द्रव्यत्वादौ व्यभिचारवारणाय। न च ध्वंसत्वे व्यभिचारः, कार्य्यपदेन भावकार्य्यविवक्षणात्। एतत् सर्व्वं महाप्रलयमङ्गीकृत्य उक्तं। अथ महाप्रलये नानाभावकार्य्याच कार्य्यमात्रवृत्तित्वस्य घटत्वादावपि सत्त्वेन तत्र च नियतसाध्यविर-हात् व्यभिचारः अतस्तदनङ्गीकारपक्षेऽपि हेत्वन्तरमाह, सन्तति-त्वादेति, नानाकालीनकार्य्यमात्रवृत्तिधर्म्मत्वञ्च एककालीनकार्य्यद्वया-वृत्तित्वे सति कार्य्यमात्रवृत्तित्वं, अत्र कल्पेऽपि घटत्वादौ पूर्व्वोक्त-व्यभिचारतादवस्थ्यवारणाय सत्यन्तं, स्वरूपासिद्धिवारणाय एक-कालीनेति, गगन-घटवृत्तित्वे व्यभिचारवारणाय विशेष्यदले मात्रपदं। एतत्कल्पे देवदत्तदुःखत्वमेव पक्षः, दुःखत्वमात्रस्य पक्षत्वे तु तत्र हेतुघटक[illegible]विरहात् स्वरूपासिद्धिः, स्वाश्र-यासमानकालीनध्वंसाप्रसिद्धिश्च महाप्रलयानङ्गीकारपक्षे एवैतत्-कल्पानुसरणादिति ध्येयं।

सकलोच्छेदे मोक्षः। न चाप्रयोजकत्वम्, सन्तत्युच्छेदे मूलोच्छेदस्य प्रयोजकत्वात्। प्रकृते च मिथ्याज्ञानस्य संसारमूलस्य श्रवणादिक्रमेणोत्पन्नतत्त्वज्ञानात् निवृत्तिः सम्भवत्येव, "आत्मा ज्ञातव्यो न स पुनरावर्त्तते" इति श्रुतिश्च प्रमाणम्। रात्रिसत्रन्यायेनार्थवादोपनीतापुनरावृत्तेः[1] अधिकारिविशेषणत्वात्[2], 'सः' आत्मज्ञः, 'न पुनरावर्त्तते' न पुनः शरीरी भवतीत्यर्थः। "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यः" इत्युपक्रम्य "दुःखेनात्यन्तं विमुक्तश्चरति" इति श्रुतिश्च मानम्।

आचार्य्यास्तु। "अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः" इति श्रुतिस्तत्र प्रमाणम् वावसन्तमिति यङ्लुकि। तेन संसारितादशायां क्षणमात्रमशरीरत्वेन नान्यथासिद्धिः। ननु द्वन्द्वस्वरसेन[3] मिलित-

---

(१) तथाच यथा हि रात्रिसत्रन्यायेन "ज्योतिर्गौरित्यादिवाक्योत्पन्नकर्मणां फलजिज्ञासायां अनन्तार्थवत्स्वर्गादिकल्पने गौरवात् विश्वजिन्न्यायापवादेन "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितं तथात्रापि अर्थवादिकापुनरावृत्तिरेव फलमिति भावः।

(२) अधिकारिनियमादिति ख०।

(३) 'द्वन्द्वस्वरसेन' प्रियस्य चाप्रियस्य प्रियाप्रिये इति द्वन्द्वस्वरसेनेत्यर्थः।

सुख-दुःखोभयनिषेधः प्रतीयते स तु नित्यवत्प्राप्त एव एकैकनिषेधे च वाक्यभेदापत्तिः। न च मुक्तौ प्रमाणमिति चेत्। न। द्वित्वेनैकेन रूपेणोपस्थितयोः प्रत्येकं निषेधान्वयेऽपि[१] वाक्यभेदाभावात् धव-खदिरौ छिन्धीत्यत्र प्रत्येकं छिदान्वय इव। न हि तत्र मिलितच्छिदा अपि च न प्रियाप्रियरूपं किञ्चिदस्तीति, मिलितनिषेधोऽप्येकैकान्वये प्रत्येकाभावे वा भवेत् तत्रैकान्वयस्याशरीरे अयोग्यत्वात् प्रत्येकाभाव एव पर्यवस्यति, अत एव सर्वमुक्तिरपि सर्वदुःखसन्ततिपक्षीकरणे तत्सिद्धेः अन्यथा मुक्तिरपि न स्यात् तत्रैव व्यभिचारात्[२]। यदि चापरात्मान एव केचित् तदा तच्छ्रुत्या मोक्षार्थं न कश्चित् प्रवर्त्तेत। शम-दम-भोगानभिषङ्गादिमुक्तिचिह्नेन[३] श्रुतिसिद्धेन सन्देहनिवृत्तिरिति चेत्। न। संसारित्वेन मुक्तियोग्यत्वात् न तु तद्विशेषणशमादिमत्त्वेन सामान्ये बाधके सत्येव योग्यताया विशेषनिष्ठत्वात्।

किञ्च शमादयः श्रुतौ सहकारितया बोधिताः न

---

(१) निषेधाबाधेऽपीति ख॰।

(२) अत्रैव व्यभिचारादिति ख॰।

(३) 'भोगानभिष्वङ्ग' भोगेषु अनासक्तिरित्यर्थं।

तु योग्यतया तत्त्वेऽपि संसारित्वेन तेऽपि साधनीयाः
श्रमादिकमपि हि कार्य्यं तत्रापि संसारित्वेनैव योग्यता
सामान्ये बाधकाभावात्। न च नित्यसुखाभिव्यक्ति-
र्मुक्तिः, सा हि न नित्या मुक्त-संसारिणोरविशेषप्रस-
ङ्गात्[१]। नोत्पाद्या, तद्धेतुशरीराद्यभावात्, ज्ञानमात्रे
सुखमात्रे वा तद्धेतुत्वावधारणात्। न च संसारि-
दशायां तद्धेतुः, सामान्ये बाधकाभावात्। अत एव
स्वर्गादौ शरीरकल्पना। किञ्च तज्जनकं[२] न ताव-
दात्म-मनोयोगः, तस्यादृष्टादिनिरपेक्षस्याजनकत्वात्।
विषयमात्रापेक्षत्वे तु संसारिदशायामपि तदभिव्यक्ति-
प्रसङ्गः। नापि योगजो धर्मः सहकारी, तस्योत्पन्न-
भावत्वेन विनाशित्वेऽपवर्गनिवृत्त्यापत्तेः। न च तज्ज-
न्याभिव्यक्तिरनन्ता, तस्या अप्यत एव नाशात्। अथ
तत्त्वज्ञानात्सवासनमिथ्याज्ञाननाशे दोषाभावेन प्रवृ-
त्त्याद्यभावाद्धर्माधर्मयोरनुत्पादे प्राचीनधर्माधर्मक्ष-
याद्दुःखसाधनशरीरादिनाश एव तद्धेतुरतएव तस्या-
नन्त्येनाभिव्यक्तिप्रवाहोऽप्यनन्त इति चेत्। न। शरीरं
विना तदनुत्पत्तेः तस्य तद्धेतुत्वे मानाभावाच्च। न च

(१) अविशेषापातादिति ख०।

(२) किं वा तज्जनकमिति ख०।

मोक्षार्थिप्रवृत्तिरेवं तत्र मानम्, दुःखहानार्थितयापि तदुत्पत्तेः। न च नित्ये सुखे मानमस्ति। "नित्यं विज्ञानमानन्दं ब्रह्म" "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितं" इत्यादिश्रुतिर्मानमिति चेत्। न। उपजननापायवतोर्ज्ञान-सुखयोरहं जानाम्यहं सुखीति भिन्नत्वेनानुभूयमानयोर्ब्रह्माभेदबोधने प्रत्यक्षबाधात्। अथ सुखस्य ब्रह्माभेदबोधनादेवायोग्यतया अनित्यं सुखं विहाय वाक्यार्थत्वेन नित्यसुखसिद्धिः स्वर्गवत् न तु नित्ये सुखे सिद्धे तदभेदबोधनं येनान्योन्याश्रयः। यद्वा नित्यं सुखं बोधयित्वा तदभिन्नं ब्रह्म बोध्यते। न च वाक्यभेदः, वाक्यैकवाक्यत्वादिति चेत्। न। आत्मनोऽनुभूयमानत्वेन तदभिन्नस्य नित्यसुखस्याप्यनुभवप्रसङ्गात् सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात् तदननुभवे वा आत्मनोऽपि अनुभवो न स्यात्। अथात्मभिन्नं नित्यसुखमनुभूयत एव सुखत्वं तत्र नानुभूयत-इति चेत्, न, सुखानुभवसामग्र्या एव सुखत्वानुभावकत्वात् तस्मादानन्दं ब्रह्मेति मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दवत्त्वं बोध्यं तेनाभेदः, अन्यथा नपुंसकलिङ्गत्वानुपपत्तेः।

एतेन ब्रह्माद्वैततत्त्वसाक्षात्कारादविद्यानिवृत्तौ वि-

ज्ञानसुखात्मकः केवल आत्मा अपवर्गे वर्तत इति वेदान्तमतमपास्तम्। स्वप्रकाशसुखात्मकब्रह्मणो नित्यत्वेन मुक्त-संसारिणोरविशेषप्रसङ्गात् पुरुषप्रयत्नं विना तस्य सत्त्वादपुरुषार्थत्वाच्च। अविद्यानिवृत्तिः प्रयत्नसाध्येति चेत्, अविद्या यदि मिथ्याज्ञानं, अर्थान्तरं वा, उभयथापि सुख-दुःखाभाव-तत्साधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात्।

त्रिदण्डिनस्तु आनन्दमयपरमात्मनि जीवात्मलयो मोक्षः, लयश्च लिङ्गशरीरापगमः, लिङ्गशरीरञ्च एकादशेन्द्रियाणि पञ्चमहाभूतानि सूक्ष्ममात्रया सम्भूयावस्थितानि जीवात्मनि सुख-दुःखावच्छेदकानीत्याहुः। तन्न। शरीरध्वंसस्य स्वतो दुःखसाधनाभावतया अपुरुषार्थत्वात्। न चोपाधिशरीरनाशे औपाधिकजीवनाशो लयः, स्वनाशस्यापुरुषार्थत्वात्, ब्रह्मणो नित्यत्वेन तदभिन्नस्य नाशानुपपत्तेः भेदाभेदस्य च विरोधेनाभावात्। नाप्यनुपप्लवा चित्तसन्ततिरपवर्गः, आवश्यकत्वेनानुपप्लवस्य दुःखाभावस्य पुरुषार्थत्वेन चित्तसन्ततेरपुरुषार्थत्वात् शरीरादिकारणं विना चित्तसन्ततेरनुत्पादाच्च। न हि चित्तमात्रं तत्सामग्री, शरीरादिवैयर्थ्यापत्तेः॥ नापि दुःखहेतुत्वेनात्मनो हानमेव मुक्तिः,

सुख-दुःखाभावेतरत्वेनापुरुषार्थत्वात् ज्ञानरूपात्महा-
नस्यायत्नसिद्धेः अतिरिक्तहानस्याशक्यत्वात्।

यत्तु योगर्द्धिसाध्यनिरतिशयानन्दमयीं जीवन्मुक्ति-
मुद्दिश्य प्रवृत्तेः कारणवशादात्यन्तिकदुःखाभावरूपां
मुक्तिमासादयतीति मतम्। तन्न। परममुक्तेरपुरु-
षार्थत्वापत्तेः विरक्तस्य मोक्षेऽधिकारात् सुखोद्देशेना-
प्रवृत्तेश्च। मोक्षे च सर्वाश्रमाणामधिकारः आश्रम-
चतुष्टयमुपक्रम्य "स ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुतेः,
सङ्कोचे कारणाभावात्। आकाङ्क्षाया अविशेषेणान-
न्तर्यस्याप्रयोजकत्वात्। कथं तर्हि "मोक्षाश्रमश्चतुर्थो
वै यो भिक्षोः परिकीर्त्तितः" इति प्रव्रज्यां मोक्षाश्रम-
माहुः, गृहस्थस्य च पुत्र-दारादिसङ्गो दुर्वार इत्य-
साधारण्येन तथोपदेशात् तत्त्वज्ञाननिष्ठो गृहस्थोऽपि
मुच्यत इत्यागमाच्च। एवं स्थिते मोक्षमुपक्रम्य "आत्मा
वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षा-
त्कर्त्तव्यः" इति श्रुतिः, श्रुतिभ्यः शरीरादिभिन्न
आत्मानमवधार्य शास्त्रेण पदार्थान् विविच्य तद्बो-
धितोपपत्तिभिस्तस्य स्थिरीकरणरूपं मननं विदधाति।
न च शब्दोपपत्तिजन्यतत्त्वज्ञानात् साक्षात्कारिसवा-
सनमिथ्याज्ञाननिवृत्तिः, दिङ्मोहादौ तथानुपलब्धेः,[1]

(१) तथानुपपत्तेरिति पा०।

अतः श्रुति-स्मृत्युपदिष्टयोगविधिना[1] चिरनिरन्तरादरसेवितनिदिध्यासनजन्ययोगजधर्मादात्मतत्त्वसाक्षात्कारं संसारबीजसवासनमिथ्याज्ञाननिहननसमर्थं[2] आसाद्य दोषाभावात्प्रवृत्त्यादेरभावे अनागतधर्मानुत्पादेनानादिभवसञ्चितकर्मणां भोगेन क्षयादपवृज्यते। उपदेशमात्राच्छरीरभिन्नात्मावगमेऽप्यन्यपरत्वशङ्कया सङ्कलकस्य[3] नाश्रद्धामलक्षालनमिति मननमावश्यकम्। तथाच मन्तव्यश्चोपपत्तिभिरिति श्रुतिरेवोपपत्तिबोधकस्य शास्त्रस्यापवर्गहेतुत्वं बोधयति, मननस्य तदेकसाध्यत्वात्। एवञ्च शम-दम-ब्रह्मचर्याद्युपबृंहितयावन्नित्य-नैमित्तिक-सन्ध्योपासनादिकर्मसहितात् तत्त्वज्ञानान्मुक्तिः। स्यादेतत् ज्ञान-कर्मणोर्न समप्राधान्येन समुच्चयः कर्मणां स्ववाक्यात् फलान्तरार्थत्वेन श्रुतत्वान्मोक्षार्थकल्पनाविरोधात् तत्त्वज्ञानस्य कर्मनैरपेक्ष्येण मुक्तिहेतुत्वप्रतीतेश्च। नाङ्गाङ्गिभावेन, तथा हि न कर्म सन्निपत्योपकारकम्, तत्त्वज्ञानशरीरानिर्वाहकत्वात्। नापि प्रयाजादिवदारादुप-

(१) श्रुति स्मृत्युपदिष्टविधिनेति ख०।

(२) संसारबीजसवासनमिथ्याज्ञानोन्मूलनसमर्थमिति ख०।

(३) अधिकारस्येत्यर्थः।

कारकम्, स्ववाक्यतएव कर्मणां प्रयोजनलाभेन फलवत्सन्निधावफलत्वाभावात् उपपत्तिविरुद्धश्च ज्ञानकर्मसमुच्चयः काम्य-निषिद्धयोरभावात्[१]। नाप्यसङ्कल्पितफलवत्काम्यकर्मसमुच्चयः, चतुर्थाश्रमविधिविरोधात्। अत एव न यावन्नित्य-नैमित्तिकसमुच्चयोऽपि। नापि यत्याश्रमविहितेन कर्मणा, तत्त्वज्ञाने सति गृहस्थस्यापि मुक्तेः।

"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते"॥

इति स्मृतेः। न चाननुगतमपि साधनं, स्वर्गवदपवर्गे प्रकारभेदाभावात्। न चापवर्गार्थिकर्त्तव्यतया कर्माणि विहितानि येन तत्समुच्चयः स्यात्। तस्मात् "सन्न्यस्य सर्वकर्माणीति स्मृतेः सर्वकर्मसन्न्यासो ज्ञानमात्राच्च मोक्ष इति। नैवम्। स्व-स्वाश्रमविहितेन कर्मणा ज्ञानस्य समप्राधान्येन समुच्चयात् ज्ञान-कर्मणोस्तुल्यत्वेन मुक्त्यर्थत्वाभिधानात्। तथाच श्रीभगवद्गीता।

"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः"॥

(१) काम्य-निषिद्धयोस्त्यागादिति ख॰।

श्रीविष्णुपुराणे ।

"तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते" ॥

हारीतः ।

"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञान-कर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्" ॥

श्रुतिश्च, "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण च" इति एतन्मूलकमेव,

"परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्त्यपण्डिताः" ।
"ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्माद्द्वयोरेव भवेत्प्रसिद्धि-
र्न ह्येकपक्षो विहगः प्रयाति" ॥

न च फलान्तरार्थत्वेन श्रुतस्य कर्मणः फलान्तरार्थत्वमनुपपन्नम्, तथा वाक्यस्वरसात् ज्ञानतुल्यताप्रतीतेः । तत्तत्फलजनकत्वेऽपि हि कर्मणां शब्द एव मानम्, एवमन्यत्रापि । भवतु वा आरादुपकारितया अङ्गाङ्गिभावेन समुच्चयः, स प्रयाजादिवद्पूर्वद्वारैव ।

यत्तु जडभरतोपाख्याने ।

"न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम्।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च" इति॥

तद्योगिधर्मसङ्गत्यागार्थं जातिस्मरत्वेन न शिक्षितानीत्येवंपरं वा। तदुक्तं। "जज्ञे जातिस्मरो द्विजः सर्वविज्ञानसम्पन्नः सर्वशास्त्रार्थतत्त्ववित्" इति[१]।

अत्र केचित्। अनुत्पन्नतत्त्वज्ञानस्य ज्ञानार्थिनस्तत्प्रतिबन्धकाधर्मनिवृत्तिद्वारा प्रायश्चित्तवदारादुपकारकं कर्म सन्निपत्योपकारकन्तु तत्त्वज्ञानम्। उत्पन्नतत्त्वज्ञानस्य तु अन्तरालव्यवहृतेः शारीरीसमाप्तिवदारव्धाश्रमपरिपालनं लोकसंग्रहार्थम्। यद्यपि लोकसंग्रहो न प्रयोजनम् सुख-दुःखाभाव-तत्साधनेतरत्वात्, तथाप्यकरणे लौकिकानां विगानान्निन्द्यत्वेन यदज्ञानं तत्परिहारार्थं तत्कर्मसाध्यदुःखोत्पादनेनाधर्मक्षयार्थञ्चेति। तन्न। तत्त्वज्ञानं प्रत्यङ्गत्वपक्षे कर्मणां ह्यपूर्वद्वारा जनकत्वं दुरितध्वंसकल्पनातो लघुत्वात् तस्मात् यानि कर्माणि उपनीतमात्रकर्तव्यत्वेन विहितानि सन्ध्योपासनादीनि तानि मोक्षार्थिभिरप्यवश्यं कर्तव्यानि तत्परित्यागस्य प्रत्यवायहेतुत्वेनाशास्त्रीय-

(१) तद्योगिधर्मत्वेन सङ्गत्यागार्थे जातिस्मरत्वेन वा न शिक्षितानीत्येवंपरस्य, तदुक्तं, जज्ञे जातिस्मरो द्विज इतीति ख०।

त्वात् सङ्कोचे मानाभावात् निषिद्धानि काम्यानि च बन्धहेतुत्वान्मुक्तिपरिपन्थीनीति त्यज्यन्ते। धनमूलानि च धनत्यागादेव त्यज्यन्ते। सोऽयं "संन्यस्य सर्वकर्माणी"त्यस्यार्थः, अयमेव हि सन्न्यासपदार्थः, तथाच श्रीभगवद्गीता।

"काम्यानां कर्मणां न्यासं सन्न्यासं कवयोविदुः।
नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः"॥

तत्त्वज्ञानं धर्मद्वारा मुक्तिसाधनं विहितत्वेन धर्मजनकत्वादिति धर्मस्यैव प्राधान्यम्। स च धर्मो मुक्त्यैव फलेन नाश्यत इति केचित्। तन्न। मिथ्याज्ञाननिवृत्त्या दृष्टद्वारेणैवोपपत्तावदृष्टकल्पनानवकाशात्। अन्यथा भेषजादिष्वपि तथा स्यात्। एवञ्च तत्रैव विहितत्वस्य व्यभिचारः।

अत्र वदन्ति। संसारकारणोच्छेदक्रमेण कार्य्योच्छेदान्मोक्षः, एवञ्च तत्त्वज्ञानमात्रादेव मिथ्याज्ञानोच्छेदादपवर्गः तत्र न तस्य कर्मसहकारित्वम् मिथ्याज्ञानोन्मूलने कर्मविनाशतस्यैव तस्य दिङ्मोहादौ हेतुत्वावधारणात् कर्मणामपवर्गहेतुताश्रुतिश्च तत्त्वज्ञानद्वाराप्युपपद्यते साक्षात्तस्याश्रुतेः। तत्त्वज्ञानवत्तथाधि-

कारे नित्याकरणेऽपि दोषाभावेन प्रत्यवायाभावोपपत्तेः। अन्यथा भोगार्थं विहित-निषिद्धाचरणेन धर्माधर्मोत्पत्तौ मोक्षाभावप्रसङ्गः। ननु तत्तत्तीर्थ-महादान-स्नान-काशीमरणादिकर्मणां तत्त्वज्ञाननैरपेक्ष्येण मुक्तिहेतुत्वं श्रूयते तत्कथं तत्त्वज्ञानमेव तद्धेतुः। न च तेषां तत्त्वज्ञानमेव व्यापारः, अनुपदं तत्त्वज्ञानानुत्पादाददृष्टद्वारा तद्धेतुत्वं वाच्यम् तथाचापवर्गकारणमेवादृष्टं कल्प्यतां लाघवात्। न च तत्त्वज्ञानप्रतिबन्धकाधर्मनाश एव तेषां व्यापारः, प्रतिबन्धकदुरितध्वंसतोऽपूर्वस्य लघुत्वात्। अथ तत्तत्कर्मणामननुगमात् कथं मुक्तिरनुगता दुःखध्वंसे प्रकाराभावादिति[1] चेत्। न। गुणनाशे समवाय्यसमवायिनाश-

---

(१) अभावरूपे दुःखध्वंसे वैजात्यकल्पनस्यासम्भवादित्यर्थः। न च प्रतियोगिनि दुःखे जातिविशेषान् कल्पयित्वा तदवच्छिन्नप्रतियोगिनां स्वाश्रयप्रतियोगिकत्वसम्बन्धेन जातिविशेषाणामेव वा जन्यतावच्छेदकत्वस्वीकारेण व्यभिचारवारणं सम्भवतीति वाच्यं। गोवधजन्यतावच्छेदकजात्या साङ्कर्य्येण तादृशजातिकल्पनाया असम्भवात्। न च गोवधजन्यदुःखानां मध्ये यानि प्रायश्चित्तनाश्यानि तन्मात्रवृत्तिर्जातिरेका यानि तत्त्वज्ञाननाश्यानि तन्मात्रवृत्तिर्जातिरेकेति न साङ्कर्य्यमिति वाच्यं। तासां नानात्वं तत्त्वज्ञानादिनाश्यतावच्छेदकजातीनां वा नानात्वं इत्यत्र विनिगमकस्य दुर्लभत्वात्।

विरोधिगुणानां नाशकत्वनियमात्[१]। तत्तन्नाशविशेषे तु तत्तद्धेतुरिति चेत्, तर्हि तत्तद्दुःखध्वंसे तत्तत्कर्मणामपि तथात्वमस्तु, तथापि तत्त्वज्ञाने तत्प्रतिबन्धकदुरितध्वंसे चाननुगतानामेव तत्तत्कर्मणां जनकत्वम् मुमुक्षुमुद्दिश्य विहितत्वं चानुगतमस्तीति चेत्। न। ज्ञान-कर्मणोर्निरपेक्षकारणताश्रवणात् व्रीहि-यववद्विकल्प एव। निरपेक्षैकसाधनावरुद्धेऽपरसाधनावरुद्धेऽपरसाधनान्वयो न विकल्पमन्तरेण सम्भवति आकाङ्क्षाविरहादिति न्यायात्[२]। साहित्यबोधकं विनैकं प्रत्यनेकस्य हेतुता यत्र शब्देन बोध्यते तत्र विकल्पेनान्वयो यथा व्रीहि-यवयोरिति व्युत्पत्तेर्वा। वस्तुतस्तु[३] दृढभूमिसवासनमिथ्याज्ञानोन्मूलनं विना न मोक्ष-

---

(१) नाशकत्वदर्शनादिति ख०।

(२) आकाङ्क्षाविरहादिति नियमादिति ख०।

(३) वेदबोधितवैकल्पिकहेतुभावेऽपि समुच्चितेभ्यो न फलसिद्धिः तत्र मिलितव्रीहि-यवाभ्यामेकयागाननुष्ठानादिति दृष्टान्ततोऽरणि-मथिवत् ज्ञान-कर्मणोः हेतुत्वे तत्सम्भवने मोक्षाभावप्रसङ्ग। नापि ज्ञान-कर्मणोः समुच्चितानां मोक्षहेतुता सम्भवति, तत्त्वज्ञानोपाये योगाभ्यासादौ ज्ञात्यसाध्यताभावे मोक्षहेतुकाशीमरणादितत्कर्मसु प्रवृत्त्यनुपपत्तेः मथुरा-काशीमरणानां सम्भवनायमनाबाध इत्यस्वरसादाह, वस्तुतस्त्विति।

इत्युभयसिद्धम्, तादृशमिथ्याज्ञाननाशे चान्वय-व्यतिरेकाभ्यां तत्त्वज्ञानकारणमवधारितमतो न तेन विना स इति तत्रापि तत्त्वज्ञानमावश्यकम्। यद्यपि मिथ्याज्ञाननाशे विरोधिगुणस्यैव हेतुत्वम्, तथापि मिथ्याज्ञानप्रागभावासहवृत्तिमिथ्याज्ञानध्वंसस्य तदेकसाध्यत्वम्। "आत्मा ज्ञातव्यो न स पुनरावर्त्तते" इति श्रुतेर्मोक्षं प्रति तत्त्वज्ञानस्य हेतुत्वावधारणाच्च "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्या तत्त्वज्ञानं विना न मोक्षः किन्तु तस्मिन्सत्येवेति प्रतिपादनाच्च। अन्यथा स्वर्गादौ न शरीरादयः कल्पेरन्। कर्म्मणां तत्त्वज्ञानद्वारापि मुक्तिजनकत्वसम्भवात् प्रमाणवतोगौरवञ्च न दोषाय। कर्म्मणां तत्त्वज्ञानविशेष एव जनकत्वं अतो न तत्राननुगमो दोषाय। वाराणसीमरणस्य तत्त्वज्ञानफलकत्वमागमादेवावगम्यते। तत्त्वज्ञानाद्दत्तफलान्येव कर्म्माणि प्रायश्चित्तादिव विनश्यन्ति अनन्यथासिद्धशब्दबलात्। न च प्रायश्चित्तस्य दुरितोत्पत्तिनिमित्तकत्वं, पापनाशफलश्रवणात्। अत एव न ब्रह्महत्यादीनां प्रायश्चित्तदुःखमेव फलम्, नरकफलश्रुतिविरोधात् प्रायश्चित्तविधिवैयर्थ्याच्च, दुःखैकफलत्वेन तत्राप्रवृत्तेः। नापि

कर्म्मान्तराधिकार एव फलम्, महापातकातिरिक्ते-ऽनधिकाराभावात् अन्यथा यत्किञ्चित्पापवतोऽकृत-प्रायश्चित्तत्वेनानधिकारापत्तेः। प्राणान्तिके तदभावाच्च। श्रूयते हि।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः[1]।
क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परात्मनि"॥

स्मृतिश्च।

"ज्ञानाग्निः सर्वकर्म्माणि भस्मसात्कुरुतेऽर्जुन" इति।

"नाभुक्तं क्षीयते कर्म्मेत्यत्र च प्रायश्चित्तादिस्मृतितः सङ्कोचस्यावश्यकत्वेन शब्दबोधितनाशकानाश्यकर्म्म-परत्वं लाघवात् न तु तत्तदन्यकर्म्मपरत्वं गौरवात् पाप-पुण्यक्षयहेतूनां बहुतरत्वात्। ज्ञानस्य नाशकत्वं शब्दबोध्यमित्युक्तम्। अथ भस्मसात्पदस्य लाक्षणिक-त्वेन यथा वह्नेः परम्परया भस्म तथा ज्ञानात्कर्म्मक्षय-इत्यर्थः। तथाच "नाभुक्तं क्षीयते कर्म्मेति स्मृतिरुत्सर्गे-ताभोगेनैव क्षयमाह, अनन्यथासिद्धप्रायश्चित्तविधिना सा बाध्यते, ज्ञाननाश्यत्वञ्च[2] भोगद्वारापि सम्भवती-त्यबाधे सम्भवति बाधकल्पना नेति चेत्। न। कर्म्मणो

(१) छिद्यते कर्मबन्धनमिति ख॰।

(२) ज्ञानस्य नाशकत्वञ्चेति ख॰।

भोगनाश्यत्वे ज्ञानस्यानाशकत्वात्। न हि भोगस्तत्त्वज्ञानव्यापारः, तथाऽश्रवणात् तेन विनापि कर्म्मण एव तदुपपत्तेश्च। कर्म्मणो भोगनाश्यत्वे तत्त्वज्ञानानुपयोगात्।

यत्तु "नाभुक्तमिति स्मृतिविरोधेन क्षीयन्तइत्यादिश्रुतेरन्यथा वर्णनम्। तन्न। स्मृतेः प्रत्यक्षवेदबाधितत्वेन विरुद्धार्थकवेदाननुमापकत्वात्। वामदेव-सौभरिप्रभृतीनां कायव्यूहश्रवणात्तत्त्वज्ञानेन कायव्यूहमुत्पाद्य भोगद्वारा कर्म्मक्षय इति चेत्। न। तपःप्रभावादेव तत्त्वज्ञानानुत्पादेऽपि कायव्यूहसम्भवात्। भोगजननार्थञ्च कर्म्मभिरवश्यं तत्तत्कायनिष्पादनमिति न तत्र तत्त्वज्ञानोपयोगः, यौगपद्यञ्च कायानां तज्जनककर्म्मस्वभावात् तपःस्वभावाद्वा(१)। न च ज्ञानं भोगद्वारा कर्म्मनाशकं इत्युक्तम्। एतेनागमयोः परस्परविरोधात् अनिर्णये विमतिपदं कर्म्म भोगनाश्यं प्रायश्चित्ताद्यनाश्यत्वे सति कर्म्मत्वात् भुक्त-भुज्यमानकर्म्मवदित्यनुमानान्निर्णय इत्यपास्तम्। ज्ञानस्य प्रायश्चित्ततुल्यत्वेनाप्रयोजकत्वात् श्रुतिबाधितत्वाच्च शब्दबोधितनाशकानाश्यत्वस्योपाधित्वाच्च अक्षतप्रधानेन

(१) तज्जनकाधर्म्मस्वभावात् तपःप्रभावादेति ख०।

ज्ञतप्रधानेन चाङ्गापूर्वेण व्यभिचाराच्च तस्य प्रधान-यागादिनाश्यत्वात्। न च तस्यापि यागस्येव स्वर्ग-फलकत्वमिति तन्नाश्यत्वमेव अधिकृताधिकारेऽपि स्वर्गकामस्याधिकारात् अन्यथा निष्फलेऽप्रवृत्तेरिति वाच्यम्। स्वर्गफलत्वेऽङ्गत्वविरोधात्। प्रवृत्तिश्च फल-वद्यागार्थितया। तदुक्तम्, "प्रधाने रागादङ्गे वैधीति। ननु "तावदेवास्य चिरं यावन्न विमोक्षः अथ सम्प-त्स्यते कैवल्येन" इति श्रुतेः तावदेवास्योत्पन्नतत्त्व-ज्ञानस्य चिरं विलम्बः यावन्नोत्पन्नकर्मणोविमोक्षः अथ सम्पत्स्यते कैवल्येनेत्यत्र भोगेन क्षयित्वा इति शेषः। न च शेषे मानाभावः, सत्यपि विज्ञाने कर्मा-वस्थाने क्लृप्तसामर्थ्यस्य भोगस्यैव नाशकत्वेनाक्षेपादिति चेत्। न। तत्त्वज्ञाने सति तत्त्वज्ञानदशायां न मोक्षः किन्तु तदग्रिमक्षण इत्यार्थत्वेनाप्युपपत्तेः।

यत्तु अज्ञातप्रधानाङ्गापूर्वाभिप्रायमेतत् "ज्ञानाग्निः सर्वकर्माणीत्यादि तेषां कार्याणां नाशकान्तराभावा-दिति। तन्न। प्रधानार्थितया क्लृप्तानां तदभावे तत्सा-मर्थ्यासिद्धेः तत्सत्त्वेऽपि सर्वकर्मपदस्य कर्मान्तरपरिग्रा-हकस्य सङ्कोचे मानाभावात्। यदपि भस्मसात्करणा-दिना फलाजनकत्वमुच्यते तत्त्वज्ञानात्कृतमपि विहितं

कर्म्म न फलायेति। तथाच श्रुतिः, तद्यथा "पुष्कर-पलाशेनापः श्लिष्यन्ते" इत्यादि। तदपि न। न हि भस्मसात्करणं क्षयश्चानुत्पत्तिरुच्यते। न च लक्षणा, मुख्ये बाधकाभावादिति। उच्यते। कर्म्मणो भोगनाश्यत्वेऽपि ज्ञानस्य कर्म्मनाशकत्वम् भोगस्य तत्त्वज्ञानव्यापारत्वात्। न च भोगमात्रस्यैव कर्म्मनाशे सामर्थ्यात्तत्त्वज्ञानव्यभिचारः, कर्म्मप्रागभावासहवृत्तिकर्म्मनाशे युगपत्कर्म्मभोगे वाऽव्यभिचारात्। अत एवानुमानेनागमबाधाप्रयोजकत्वेन च श्रुतिवाक्यशेषे मानाभावः। उत्पन्नतत्त्वज्ञानस्यापवर्गविलम्बोपपादनार्थं उक्तरीत्या भोगस्यैवाक्षेपादिति, तदस्यापवर्गस्य परमपुरुषार्थस्य श्रुतिसिद्धं कारणमनुमानमिति विविक्तम्॥

इति श्रीमहामहोपाध्याय-श्रीगङ्गेशविरचिते[1] तत्त्वचिन्तामणौ अनुमानाख्य-द्वितीयखण्डे ईश्वरानुमानं।

समाप्तञ्च द्वितीयमनुमानखण्डं॥

---

(१) श्रीगङ्गेश्वरविरचित इति क्वचित्लिखित-पुस्तकपाठेन तत्त्वचिन्तामणिप्रणेता गङ्गेशेतिनाम्नेव गङ्गेशेतिनामसमानार्थकगङ्गेश्वरेतिनाम्नापि प्रसिद्ध आसीदित्यहं सम्भावयामीति।

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

New Series.—No. 844.

# THE TATTVA-CHINTAMANI

BY

GANGESA UPADHYAYA.

## VOLUME IV.

UPAMANA-KHANDA

WITH THE COMMENTARY OF

KRISHNA KANTA VIDYA VAGISA

EDITED BY

PANDIT KAMAKHYA NATHA TARKA VAGISA

*Professor, Sanskrit College, Calcutta*

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS

1894.

तत्त्वचिन्तामणौ

# उपमानखण्डं ।

श्रीमद्गङ्गेशोपाध्यायविरचितं ।

श्रीकृष्णकान्तविद्यावागीशविरचितदीपन्याख्यटीकासहित ।

---

आसियाटीक-सोसाइटी-समाजानुमत्या

संस्कृतविद्यालयाध्यापक-

श्रीकामाख्यानाथ-तर्कवागीशेन

परिशोधित ।

---

कलिकाताराजधान्यां

बापतिस्त मिशनयन्त्रे मुद्रित ।

शकाब्दा १८२६ । ई० १९०४ ।

ॐ गणेशाय नमः ।

# तत्त्वचिन्तामणौ ।

## उपमानाख्यतृतीयखण्डं ।

अथोपमानं निरूप्यते,[1] तच्च सादृश्यप्रमाकरण-

---

### उपमानाख्यतृतीयखण्डदीपनी ।

श्रीकृष्णचरणाम्भोजद्वन्द्वं स्वान्ते निधाय च ।
तनोति श्रीकृष्णकान्तस्तृतीयमणिदीपनीं ॥

तृतीयचिन्तामणिदीपनी स्वयं
निहन्तु विद्वद्गणसंशयात्मकं ।
तमिस्रमेषा निविडं हृदिस्था
यथा दिनेशो बहिरन्धकारं[2] ॥

---

(१) मथुरानाथप्रणीताया उपमानखण्डव्याख्याया दुर्लभत्वात् व्याख्यासहकारं विना चिन्तामणिग्रन्थस्य दुर्बोधत्वाच्च जगदीशसर्वस्वसम्बन्धशक्तिप्रकाशिकाव्याख्याकृत्कृष्णकान्तभट्टार्यप्रणीतव्याख्यया सहितमुपमानाख्यतृतीयखण्डं प्रकाशितमिति ।

(२) एषा तृतीयचिन्तामणिदीपनी हृदिस्था सती विद्वद्गणसंशयात्मकं निविडं गाढं तमिस्रं अन्धकारं बहिरन्धकारं दिनेश इव निहन्तु विनाशयतु इति समुदितार्थः ।

तृतीयचिन्तामणिमाथुरी पुनः
सुदुर्लभा चेति परिश्रमो मम ।
अत्यन्तयत्नैर्लिखितापि सत्पथ-
प्रकाशिनी नेति मतिर्नियोजिका ॥
श्रीकृष्णकान्तवचनं तत्त्वज्ञानफलप्रदं ।
विहाय माथुरीचिन्ता क्रियते सूरिभिः कथं ॥

लक्षण-स्वरूप-प्रामाण्यादिप्रकारेणानुमानं निरूप्य शिष्यशुश्रूषार्थमुपमाननिरूपणं प्रतिजानीते, 'अथेति' अनुमाननिरूपणानन्तरमित्यर्थः । यद्यपि ग्रन्थलाघवार्थमनुमाननिरूपणप्रागेवानुमानोपमानयोरवसरसङ्गतिः प्रदर्शिता[1] इति पुनस्तत्प्रदर्शनमनुचितं[2] तथापि उपमाननिरूपणेऽनुमाननिरूपणानन्तर्यानभिधाने उपमानस्यानुमानान्तर्गतत्वसन्देहेन समस्तचिन्तामणिग्रन्थाध्ययनाधीनफलार्थिनोऽधीतप्रत्यक्षादिपरिच्छेदद्वयस्य उपमानाकाङ्क्षायां निवृत्तिः स्यात् विभिन्य शुश्रूषापि न स्यादिति तदभिधानं । न च केवलात् 'उपमानं निरूप्यते' इति प्रतिज्ञावाक्यादेव प्रतिज्ञान्तरावगमात् अर्थत एवानुमानपरिच्छेदसमाप्तिज्ञाने उपमानस्यानुमानान्तर्गतत्वाभावनिश्चयात् कुतस्तत्संशय इति वाच्यं । तथापि प्रतिज्ञेयं अनुमानविशेषनिरूपणविषयिणी न वा इति संशयेन तादृशसंशयोत्पादे

---

(१) तथाच अनुमानापेक्षया प्राथमिकजिज्ञासाविषयत्वप्रयोजकमङ्ग-वादिसम्मतत्वकथनेन विरोधीभूतानुमानजिज्ञासाया विषयसिद्ध्या निवृत्तौ सत्यामुपमानं निरूपणीयमिति सूचनात् अवसरसङ्गतिः प्रदर्शितेति भाव ।

(२) अथेत्यादिग्रन्थेन पुनः सङ्गतिप्रदर्शनमनुचितमित्यर्थः ।

बाधकाभावात्। आनन्तर्य्याभिधाने तु अनुमानपरिच्छेदसमाप्ति-ज्ञानात् उपमानेऽनुमानानन्तर्गतत्वनिश्चयेन तादृशसंशयानुत्पत्तेः। एवं 'अथ'शब्दस्य मङ्गलवाचितया ग्रन्थारम्भे मङ्गलवाचकशब्दाभि-धानस्य ग्रन्थकर्त्तृणां रीतिसिद्धतयापि तदभिधानं।

मिश्रास्तु 'अथ'शब्देनैवावावसरसङ्गतिः प्रदर्शिता। अनुमानग्रन्थे तादृशपाठस्तु काल्पनिकः। न च स्वरूपसत्याः सङ्गतेरपेक्षितत्वेऽपि तत्प्रदर्शनमफलं इति वाच्यं। अनुमानग्रन्थ एव सङ्गतिप्रदर्शन-प्रति-ज्ञाफलयोर्दर्शितत्वात् अत्रापि तयोरेव तत्फलत्वात् इति वदन्ति।

अपरे तु 'उपमानं निरूप्यते' इत्येवात्र पाठः। 'अथ'शब्दस्तु काल्पनिकः किं तदर्थविवेचनया इत्याहुः। एतन्मतद्वयमेव न साधु सकलतात्त्विकसिद्धपाठानामपलापापत्तेः।

अन्ये तु 'अथ'शब्दोऽत्र नानन्तर्य्यार्थकः परन्तु तस्य मङ्गलवाचितायाः "अथ स्यान्मङ्गले मत्ते" इत्यादि कोषसिद्धतया ग्रन्थादौ मङ्गलवा-चकशब्दप्रयोगस्य ग्रन्थकारीयरीतिसिद्धतयैव तदभिधानमित्याहुः। तदप्यसत् आनन्तर्य्यानभिधाने दत्तदोषस्यैव जागरूकत्वात्।

लटा वर्त्तमानकृतिसाध्यत्वप्रतिपादनात् वर्त्तमानकृतिसाध्यनिरू-पणविषय उपमानमिति प्रतिज्ञार्थः। उपमानपदस्य भावकरण-व्युत्पत्त्या उपमिति-तत्करणोभयपरतया उभयोरेव प्रतिज्ञानत्वेन अग्रे उपमितिनिरूपणस्य नार्थान्तरत्वमित्यवधेयं। सादृश्यस्याति-रिक्तपदार्थतावादिनां मीमांसकानां मतमुपन्यस्यति, 'तत्रे'त्यादिना 'इत्यतिरिक्तं सादृश्यमित्यन्तेन'(१)। 'तत्र' उपमाननिरूपणे, सप्तम्यर्थो

(१) इत्यधिकं सादृश्यमित्यन्तेनेति क्वचिद्धितपुस्तकपाठः, एतादृशपाठेन कस्यचिन्मूलपुस्तकस्य तादृशः पाठोऽनुमीयते।

घटकत्वं विषयत्वं वा, तथाचोपमाननिरूपणस्य घटकं विषयो वा यदुपमानं तत् सादृश्यप्रमाकरणस्वरूपमिति योजना। 'सादृश्ये-त्यादि' किञ्चित्पदशक्यतावच्छेदकत्वावगाहिनी या सादृश्यावच्छिन्न-विशेष्यक-यत्किञ्चित्पदशक्यत्वप्रकारिका प्रमा तत्करणमित्यर्थः, तेषां मते गोसदृशो गवयपदवाच्य इत्याकारिकैवोपमितिः, न तु गवयो गवयपदवाच्य इत्याकारिका, सादृश्यस्यातिरिक्तत्वया गवय-त्वजात्यपेक्षया अगुरुत्वेन तस्यैव गवयपदप्रवृत्तिनिमित्ततया उप-मितौ पारतन्त्र्येण सादृश्ये शक्यतावच्छेदकत्वभानेन तस्यास्तद्व-गाहित्वं सादृश्यप्रमाकरणस्योपमानरूपप्रमाणत्वाभिधानेनैव सादृश्य-प्रमाया उपमितित्वमर्थत एवावगम्यते। प्रमात्वन्तु प्रकृते ज्ञानत्वमेव न तु तद्वति तत्प्रकारकत्वरूपं तन्निवेशे प्रयोजनाभावात्। न च प्रमात्वाभिधानमयुक्तं ज्ञानत्वाभिधानस्यैव सम्यक्त्वात् इति वाच्यं सूत्रे प्रमाणपदश्रवणात् 'प्रमाणलक्षणमथ विविच्यते' इत्यनेन प्रमाण-निरूपणस्य प्रतिज्ञातत्वाच्च प्रमाकरणस्यैव प्रमाणत्वात् प्रमात्वाभि-धानात्। ननु गोसदृशं द्रव्यं सादृश्य गवयपदशक्यतावच्छेदकमिति स्मृतिकरणेऽनुभवेऽतिव्याप्तिवारणाय प्रमात्वनिवेशनमावश्यकं स्मृते-र्गृहीतग्राहित्वेन तेषां मतेऽप्रमात्वादिति चेत्, न। तथापि तादृ-शानुमितिकरणेऽतिव्याप्तेर्दुर्वारत्वात् अतः शक्यत्वप्रकारतानिरूपित-विशेष्यतावच्छेदकत्वावच्छिन्नविशेष्यतानिरूपितशक्यतावच्छेदकत्वप्र-कारताया निवेशनतया अतिव्याप्तिविरहात् अनुमितौ पारतन्त्र्येण भानास्वीकारात्। न च तथापि तादृशप्रत्यक्षादिकरणेऽतिव्याप्ति-रिति वाच्यं। तादृशविषयतानियतधर्मावच्छिन्नकार्यतानिरूपित-

कारणताया लक्षणघटकत्वात् प्रत्यक्षत्वादेस्तादृशविषयतानियतत्वा-भावात् । तादृशप्रमाकरणञ्च सादृश्यविशिष्टपिण्डप्रत्यक्षमिति साम्प्रदायिकाः ।

नव्यास्तु सादृश्यप्रमा करणं यथेतिव्युत्पत्त्या सादृश्यप्रमाजन्यत्व-लाभः, 'उपमानं' उपमितिः, 'प्रमात्वं' ज्ञानत्वमेव, लौकिकप्रत्यक्षत्वं वा, तथाच सादृश्यप्रकारकलौकिकप्रत्यक्षजन्यज्ञानमुपमितिरिति पर्य्यवसितार्थः । न चैवमुपमानप्रमाणनिरूपणे अर्थान्तरं न्यूनत्वं वा इति वाच्यं । सादृश्यप्रमाकरणतानिरूपकत्वस्य उपमितौ ज्ञानकाले तुल्यवित्तिवेद्यतया उपमितिनिरूपितकरणताया अपि तादृश-प्रमायां सत्त्वात् तस्यैव तल्लक्षणत्वमित्यर्थतो लाभात्, तथाच तादृश-प्रत्यक्षकरणतानिरूपकज्ञानकरणज्ञानत्वं उपमानप्रमाणलक्षणं पर्य्य-वसितं, तादृशप्रत्यक्षकरणतानिरूपकज्ञानत्वमेवोपमितिलक्षणं, तादृ-शप्रत्यक्षानुव्यवसाये उपमानलक्षणस्य उपमित्यनुव्यवसाये उपमिति-लक्षणस्य अतिव्याप्तिवारणाय कारणतामुपेक्ष्य करणतानिवेशः, करणतानिरूपकत्वञ्च तादृशप्रत्यक्षजन्यव्यापारजन्यत्वे सति तादृश-प्रत्यक्षजन्यत्वं तत्र विशेष्यदलनिवेशे प्रयोजनाभावात् सत्यन्तमेव लक्षणे निवेश्यं, तादृशज्ञानकरणत्वञ्च तादृशज्ञानजनकव्यापारजनकत्वं अतो न विशेषणज्ञानादावुपमानलक्षणातिव्याप्तिः इति वदन्ति ।

वस्तुतस्तु सादृश्यप्रमा क्रियते येन इति व्युत्पत्त्या तादृशप्रमा-प्रयोजकमित्यर्थः, प्रमितसादृश्यनिरूपकमिति पर्य्यवसितं, तच्च गव-यादिनिष्ठं सादृश्यं निरूपकं गवादि अतएव गवयस्योपमानं गौः गोरुपमेयो गवय इति व्यवह्रियते लोकैः, तथाहि गवयपदोत्तर-

षष्ठ्या विशेष्यत्वमर्थः, उपपूर्वकमाधातोश्च सादृश्यप्रकारकप्रमाऽर्थः, तथाच गवयविशेष्यकसादृश्यप्रकारकप्रमानिरूपको गौरिति तदर्थः, गोरुपमेयो गवय इत्यस्य तु गौरिति षष्ठ्यर्थानिरूपितत्वं तथाच गोनिरूपितसादृश्यप्रकारकप्रमाविषयो गवय इत्यर्थः। अश्वस्योपमानं गौः गोरुपमेयोऽश्व इति व्यवहारवारणाय धात्वर्थे प्रमात्वान्तर्भावः, अतएव लक्षणेऽपि तन्निवेशितं, अन्यथा सादृश्यव्यवहारापत्तिः। उपमितिस्तु सादृश्यप्रमैव, सादृश्यप्रमात्वन्तु तल्लक्षणमिति तु परमार्थः।

अपरे तु गवादिज्ञानमेव उपमानं लक्षणन्तु सादृश्यप्रकारकप्रमाकरणत्वं। न च गवादिज्ञाने सादृश्यप्रमाकरणत्वं बाधितमिति वाच्यं। सादृश्यविशिष्टबुद्धौ सादृश्यज्ञानस्य विशेषणज्ञानविधया हेतुत्वात् तत्र च गोज्ञानस्य हेतुत्वात् निरूप्यज्ञाने निरूपकज्ञानस्य हेतुताया औत्सर्गिकत्वादिति यथाश्रुतमेव सम्यक् इत्याहुः। तन्मन्दं तत्र तत्करणताया असिद्धत्वात्, यदि तज्जनकजनकत्वमेव तत्करणत्वं तथापि गवयस्योपमानं गौरित्यादिव्यवहारानुपपत्तिः सादृश्यप्रमाया धात्वर्थत्वेन गवादौ तदन्वयबाधात् स्वजनकज्ञानजनकज्ञानविषयतासम्बन्धेन तत्र तदन्वये तादृशसम्बन्धस्य वृत्त्यनियामकतया अश्वो न गवयस्योपमानं इत्यत्र शाब्दबोधानुपपत्तेः सादृश्यप्रकारकज्ञानजनकज्ञानस्य लक्षणया धात्वर्थत्वे तु गोरुपमेयो गवय इत्यादौ शाब्दानुत्पत्तेरवारणात् तत्र ज्ञानजन्यज्ञानजन्यसादृश्यप्रमाया धात्वर्थत्वे ज्ञानजन्यज्ञानजन्यत्वस्य षष्ठ्यर्थत्वे वा लक्षणास्वीकारापत्तेः नानाव्युत्पत्तिस्वीकारप्रसङ्गात् तादृशसम्बन्धेन गोरन्वये तु नञ्समभिव्याहारस्थले तदसम्भवात्। वयन्तु गोविशेष्यकगवयसादृश्यप्रका-

**मुपमानमिति केचित् । सादृश्यञ्च पदार्थान्तरम्, तथाहि । सादृश्यव्यवहारादबाधितादस्ति[१] सादृश्यं,**

---

रूपप्रमाकरणमित्यर्थः, तच्च गवयविशेष्यकगोसादृश्यज्ञानं सत्यचादिरूपं अतिदेशवाक्यार्थस्मृतिरूपव्यापारद्वारा तज्जन्यं गोविशेष्यकगवयसादृश्यज्ञानमुपमितिरित्यर्थाल्लभ्यते इति वदामः ।

ननु सादृश्यस्यानुगतस्याभावात् एकविधसादृश्यनिवेशे अन्योपमानेऽव्याप्तिः साम्प्रदायिकमते सादृश्यस्य स्वरूपतोऽभावात् गवयत्वमुपेक्ष्य तत्र शक्यतावच्छेदकत्वकल्पने गौरवञ्च इत्यत आह, 'सादृश्यञ्चेति, 'पदार्थान्तरं' अतिरिक्तपदार्थः, तथाच सोऽनुगतः स्वरूपतो भातोऽपि इति नानुपपत्तिरिति भावः । ननु तस्यातिरिक्तपदार्थत्वे किं मानमित्याकाङ्क्षायां तस्य तथात्वे युक्तिमाह, 'तथाहीति, 'तथाहि' सादृश्यस्यातिरिक्तपदार्थतां जानीहि इत्यर्थः, तत्रादौ सादृश्यमेव प्रमाणयति, 'सादृश्यव्यवहारादिति, धर्म्यसिद्धौ धर्मविवेचनाया उन्मत्ततासम्पादकत्वादिति भावः । बाधितव्यवहारस्याप्रमाणत्वेन वस्तुसाधकत्वादाह, 'अबाधितादिति । अथाबाधितत्वं न भ्रमसामान्यभिन्नज्ञानजनकत्वं तन्मते भ्रमाप्रसिद्धेः । नापि प्रमाजनकत्वं, भ्रमस्यापि किञ्चिदंशे प्रमात्वसम्भवात् । नापि सन्मात्रविषयकज्ञानजनकत्वं, मात्रार्थाप्रसिद्धेः । अत एवासद्विषयकान्यज्ञानजनकत्वमित्यपि न, असतोऽप्रसिद्धेरिति चेत्, सन्निरूपितं,

---

(१) सदृशव्यवहारादबाधितादस्तीति ख० ।

तच्च न प्रतिपदार्थमेकं सर्वस्य सर्वसदृशत्वापत्तेः सुसदृश-मन्दसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेश्च। न च व्यञ्जकभूयःसामान्याल्पत्व-भूयस्त्वाभ्यां तद्धीरिति वाच्यम्।

---

यावत्स्वविषयिताकत्वं स्वविषयितात्वव्यापकस्वनिरूपितत्वकत्वमिति यावत्, इति साम्प्रदायिकाः तच्च, बाधितव्यवहारस्यापि तथात्वात्। वस्तुतस्तु धर्म-धर्मिसाकाङ्क्षवैशिष्ट्यानवगाहिज्ञानसामान्यभिन्नज्ञान-जनकत्वं तत्। अबाधितत्वमनिवार्यत्वमित्यपि कश्चित्। सादृश्यत्व-स्यानुगतत्वादेव तस्यानुगतत्वं न त्वेकत्वादित्याह, 'तच्चेति सादृश्यञ्चे-त्यर्थः। ननु तस्यैकत्वे का क्षतिरित्याकाङ्क्षायामाह, 'सर्वस्येत्यादि, तथाच गवयनिष्ठगोसादृश्यस्य खरनिष्ठाश्वसादृश्याभिन्नतया गवयो-ऽश्वसदृश-इति व्यवहारापत्तिरिति भावः।

ननु सादृश्यस्य एकत्वेऽपि अश्वनिरूपितत्वविशिष्टसादृश्याधि-करणताया गवये बाधान्न तथा व्यवहारः अश्वसादृश्यं गवयेऽस्ति इति व्यवहारस्य इष्टत्वादित्यतो दोषान्तरमाह, 'सुसदृशेति, 'तदेकत्वे' सादृश्यस्यैकत्वे, 'अनुपपत्तेरिति, तद्गतभूयोधर्मवत्ति यत्सादृश्यं तत् सुसादृश्यं तद्गताल्पधर्मवत्ति यत्सादृश्यं तन्मन्दसादृश्यं यथा गोसदृशो गवयः अश्वसदृशः पीतगौरित्यादौ तस्यैकत्वे तन्नोपपद्यते विरुद्धयोः शोभनत्व-मन्दत्वयोरेकत्रासम्भवात् इति भावः। प्रकृते, 'न चेति सादृश्यज्ञानजनकज्ञानविषयाणां सादृश्यनियतानां वा भूयसां साधा-रणधर्माणां अल्पत्व-बहुत्वज्ञानाभ्यामित्यर्थः, 'तद्धीरिति सुसदृशत्व-मन्दसदृशत्वधीर्यत इति व्युत्पत्त्या तद्व्यवहार इत्यर्थः, तथाच तयोः

बहुभिरल्पैश्च व्यज्यमानघटादौ ह्रास-वृद्ध्योरदर्शनात् व्यञ्जकाभिमतादेव व्यवहारसिद्धौ अतिरिक्तासिद्धेश्च। नापि संयोगवत् व्यासज्यवृत्त्यनेकम्, गोत्वोपलक्षितसादृश्याश्रयत्वात् गवयवत् गोरपि सुसदृशत्वप्रसङ्गात् गोरसन्निकर्षे संयोगवदप्रत्यक्षत्वप्रसङ्गाच्च। प्रत्यक्षत्वे वा

---

कालिकाव्याप्यवृत्तितया एकस्मिन् समावेशासम्भवादिति भावः। शङ्कां निरस्यति, 'बहुभिरित्यादि, 'घटादौ' घटादिनिष्ठसादृश्ये इत्यर्थः, घटादिरादिराश्रयो यस्येति व्युत्पत्तेः, 'ह्रासवृद्ध्योः' व्यञ्जकानामल्पत्व-बहुत्वयोः, 'अदर्शनात्' सर्व्वैश्च ज्ञातुमशक्यत्वात् तथाच यत्र तादृशज्ञानं नास्ति तत्र तादृशव्यवहारो न स्यादिति भावः। ननु यत्र तादृशज्ञानं नास्ति तत्र तादृशव्यवहार एव नेत्यतो दोषान्तरमाह, 'व्यञ्जकाभिमतादेवेति, तद्गतभूयःसाधारणधर्म्मादेवेत्यर्थः, 'व्यवहारसिद्धौ' सादृश्यव्यवहारोपपत्तौ, 'अतिरिक्तासिद्धेः, सादृश्यातिरिक्तपदार्थत्वासिद्धेः, व्यवहारस्यैव तत्कल्पकत्वादिति भावः।

पुनः शङ्कते, 'नापीति,'व्यासज्यवृत्ति' उभयवृत्तीत्यर्थः, 'अनेकमिति, एकत्वे उक्तदोषतादवस्थ्यादिति भावः। गोत्वविशिष्टसादृश्यस्य गवये बाधात् 'गोत्वोपलक्षितेति फलितं, 'सुसदृशत्वप्रसङ्गादिति तथाच गोसदृशो गौरिति व्यवहारप्रसङ्गादित्यर्थः। ननु स्वनिरूपितत्वविशिष्टसंयोगस्यैव स्वनिरूपितत्वविशिष्टसादृश्यस्य स्वस्मिन् बाधाच्च तथा व्यवहार इत्यत आह, 'गोरसन्निकर्ष इति, 'अप्रत्यक्षत्वप्रसङ्गात्'

गवयनिरूपितसादृश्यस्यैकवित्तिवेद्यत्वेन गोनिष्ठतया

---

तद्विषयकलौकिकप्रत्यक्षाभावप्रसङ्गात्, निरूप्यसाक्षात्कारस्य निरूपकसाक्षात्काराधीनत्वादिति भावः। ननु सादृश्यस्य सामान्यादिगतत्वेनासमवेतत्वात् लौकिकसन्निकर्षाभावेन न लौकिकप्रत्यक्षविषयत्वं किन्त्वलौकिकप्रत्यक्षविषयत्वमेवातोऽनोक्तदोष इत्यत आह, 'प्रत्यक्षत्वे वेति, अलौकिकप्रत्यक्षमात्रनिरूपितविषयत्वे वेत्यर्थः। 'एकवित्तिवेद्यत्वेन' तज्ज्ञानरूपैकोपनयसन्निकर्षवेद्यत्वेन, 'चाक्षुषत्वप्रसङ्ग' इति उपनीतचाक्षुषविषयत्वप्रसङ्ग इत्यर्थः, उपनीतप्रत्यक्षे विशेष्यविशेषणभावस्य कामचारादिति भावः। इति साम्प्रदायिकाः।

वस्तुतस्तु ननु निरूप्यसाक्षात्कारे निरूपकसाक्षात्कारस्य हेतुत्वे मानाभावः गगनसंयुक्तो घट इत्यादिसंयोगसाक्षात्कारे व्यभिचारात् परन्तु सम्बन्धसाक्षात्कारे सम्बन्धिनोरेकतरसाक्षात्कारस्यापि सम्बन्धिसाक्षात्कारत्वेन हेतुत्वं घटसंयोगि गगनमिति साक्षात्कारस्य सन्निकर्षाभावादेव वारणसम्भवादित्यत आह, 'प्रत्यक्षत्वे वेति गोरसन्निकर्षदशायामपि गोसादृश्यस्य लौकिकप्रत्यक्षविषयत्वे वा इत्यर्थः, स्वीक्रियते इति शेषः, 'एकवित्तिवेद्यत्वेन' एकसामग्रीग्राह्यत्वेन गो-गवयसन्निकर्षदशायां सादृश्यसामग्रीतो गवये गोसादृश्यग्रहः गवि गवयसादृश्यग्राहिका तादृशसामग्र्येव इति नियमतो द्विविधविषयकचाक्षुषप्रसङ्ग इत्यर्थः। 'अथवा एकवित्तिवेद्यत्वेन' एकज्ञानविषयत्वेन, नियमत इत्यादिः, अभेदे तृतीया, तथाच तादृशविषयत्वाभिन्नचाक्षुषविषयत्वप्रसङ्ग इत्यर्थः, सामग्र्या अविशेषादिति भावः। इति

चाक्षुषत्वप्रसङ्गः, किन्तु प्रत्याश्रयं भिन्नम् । न चैकैकस्य व्यभिचारादनुगतरूपाभावाच्चानुगतप्रत्ययः सादृश्यपदव्युत्पत्तिश्च न स्यादिति वाच्यं । अनुगताकारवि-

---

तु सारं, इदमापातत उभयसादृश्यभासकसामग्रीसद्भावे एकज्ञानविषयत्वमिष्टमेव, न हि बाधाभावादिघटितसामग्र्योरैक्यं सम्भवति, अन्यथा सिद्धान्तिमतेऽप्यनिस्तारात् । अतएव एतत्कल्पेऽनिर्भरसूचनायैव वाशब्द उक्त इत्यप्यन्ये । तदा किमित्याकाङ्क्षायामाह, 'प्रत्याश्रयमिति, 'भिन्नमिति, तथाच न पूर्व्वोक्तदोषाणामवकाश इति भावः । 'न चेति 'वाच्यमिति परेणान्वयः, 'एकैकस्य' गवय-महिषादिनिष्ठस्य गोसादृश्यस्य, 'व्यभिचारात्' अयं गोसदृश इति प्रतीतिविषयनिष्ठभेदप्रतियोगितावच्छेदकत्वात् । नन्वसादृश्यानां प्रत्याश्रयभिन्नत्वेऽपि सादृश्यवृत्त्यनुगतधर्म्मादेवानुगतप्रत्ययः पदव्युत्पत्तिश्च स्यादित्यत आह, 'अनुगतरूपाभावाच्चेति, अनुगतप्रत्ययाभावे कदाचिदिष्टापत्तिसम्भवात् पदव्युत्पत्तिपर्य्यन्तानुधावनं, गोसादृश्यानामननुगमे सदृशपदजन्यबोधविषयतावच्छेदकावच्छिन्नशक्तविषयतारूपा पदशक्तिर्न स्यादित्यर्थः, यथाश्रुतन्तु न सङ्गच्छते सादृश्येत्यस्य वाक्यत्वेन पदत्वाभावात् । सादृश्यानां तद्वृत्तिधर्म्माणाञ्चाननुगमे आनन्त्यभयेन सादृश्यपदस्य सादृश्यविशिष्टे शक्तिकल्पनाऽसम्भवात् पदाशक्यत्वेन सादृश्यमलीकं स्यात् कथञ्चित्सदादिपदशक्यत्वेऽपि सदृशपदाबोध्यत्वप्रसङ्गस्य दुर्व्वारत्वमिति भावः । शङ्कां निरस्यति, 'अनुगताकारेति, पञ्चम्यन्तत्रयं 'तयोरुपपत्तेरित्यत्रान्वितं, सादृश्यत्वेऽनुगताकारवित्ति-

त्तिवेद्यसादृश्यत्वसामान्यात् . सप्तपदार्थातिरिक्तत्वाद्वा जातिवदन्त्यविशेषवच्च स्वलक्षणाद्वा[1] तयोरुपपत्तेः।

---

वेद्यत्वकथनेन तस्यानुगमे प्रमाणं प्रदर्शितं तथाच सादृश्यत्वमनुगतं अनुगतप्रतीतिविषयत्वात् घटत्ववत् विषयानुगमं विना प्रतीत्यनुगमासम्भवात् इत्यनुकूलतर्कसहितमनुमानमेव तत्र प्रमाणमिति भावः। 'सामान्यात्' सामान्यधर्म्मात्। ननु किं नाम सादृश्यत्वं न जातिरसमवेतत्वात् समवेतत्वेऽपि स्वरूपतोऽप्रकारत्वात्, नाप्यखण्डोपाधिस्तत एव, किन्तु स्वरूपसम्बन्धविशेष इति तथापि नानात्वं दुर्व्वारं उक्तानुमानस्य बाधदूषणग्रस्तत्वादित्यत आह, 'सप्तेति, तथाच सप्तपदार्थभिन्नत्वमेव सादृश्यत्वं तादृशभेदस्यैकत्वेन सकलसादृश्यवृत्तित्वेन चानुगतत्वात् इति भावः। ननु सप्तपदार्थभिन्नत्वमेव तचासिद्धं प्रमाणाभावात् अत आह, 'जातिवदिति जातौ यथा स्वलक्षणात् स्वात्मकव्यावर्त्तकधर्म्मात् तयोरुपपत्तिस्तथेत्यर्थः, एवमग्रेऽपि, जातित्वस्य स्वरूपसम्बन्धरूपतया जातिरूपत्वेऽपि यत्त्व-तत्त्ववत् यथानुगतत्वं तथा इति पर्य्यवसितं, तथाच नानात्वेऽप्यनुगतत्वं भवतापि स्वीकार्य्यमिति सादृश्यत्वस्य स्वरूपसम्बन्धरूपत्वेऽनुगतत्वं दुरपवादमेवेति भावः। ननु जातित्वं ध्वंसाप्रतियोगित्वे सत्यनेकवृत्तित्वं, अनेकत्वन्तु स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वं तथानुगतमेव यत्त्व-तत्त्वयोरनुगतत्वन्तु प्रमाणासिद्धमित्यत आह, 'अन्त्यविशेषवच्चेति पदार्थनिरूपणे योऽन्त्यः अभावपदार्थः तथैवेत्यर्थः, अतएव

---

(१) स्वसाक्षाद्दृश्यत्वादिति ख०।

"न रूप रूपवत्त्वेन क्रियावत्त्वात् न कर्म तत् । न शेष समवायित्वात् तमोऽन्यद्द्रव्यमिष्यते"। इत्यत्र शेष अभाव इत्युपायकारेण व्याख्यात। तथाचाभावत्वमनुयोगिताविशेष तस्य स्वरूपसम्बन्धरूपत्वेनाभावरूपतया अननुगतत्वेऽपि यथानुगतप्रत्ययादिसम्पादक तथाचापीति भाव । अभावत्वस्याखण्डोपाधित्वे भावभिन्नत्वस्वरूपत्वेऽप्याह, 'विशेषेति। न चायमाधत्विखनपरित्यागे बीजाभाव इति वाच्य। स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात् एतेनाभावविशेषवत्त्वेत्यनुक्त्वा अन्त्यविशेषवत्त्वेति कथमुक्त इत्यनुयोगोऽपि निरस्त । परमाणूना व्यावर्त्तको विशेष-एव तद्व्यावर्त्तकन्तु स्वस्वैवानवस्थाभयात् विशेषत्वस्य स्वरूपसम्बन्धरूपत्वेन विशेषरूपत्वात् इत्यननुगतस्यापि अनुगतप्रत्ययादिसम्पादकत्व भवतापि स्वीकार्य्यमिति भाव ।

साम्प्रदायिकास्तु अवयवानामन्त परमाणु तन्निष्ठोऽन्त्य, तथाच परमाणुनिष्ठविशेषवत्त्वेत्यर्थ, अतएव समासत्विखनमपि सङ्गच्छते । न च परमाणुनिष्ठत्वाभिधानमनर्थक, विशेषपदस्य व्यावर्त्तकपरत्वात् स च फलतो विशेष एव तत्र तदभिधानेन विशेषे प्रामाणिकत्वप्रतिपादनात्, तथाहि परमाणुना परस्परभेदसिद्ध्यर्थमवश्यमेको व्यावर्त्तक स्वीकरणीय अन्यथा सकलपरमाणुनामैक्यापत्ते तथाच तेषा व्यावर्त्तनान्यथानुपपत्तिरेव तत्र प्रमाणमिति भाव । न च नित्यद्रव्यनिष्ठेति किं नोक्तमिति वाच्य। गगनादौ शब्दादेर्व्यावर्त्तकत्वसम्भवेन तत्र विशेषानभ्युपगमेऽपि क्षत्यभावादिति भाव । शेष पूर्व्ववदित्याऊ ।

ननु सादृश्यस्यातिरिक्तत्वे किं मान इत्याशङ्का तत्तत्पदार्थ-

**तच्च न द्रव्यं गुणः कर्म्म वा गुण-कर्म्मवृत्तित्वात् । न च सदृशाश्रयत्वादेव[1] तत्र व्यवहारः, आश्रयवैसादृश्ये-ऽपि तत्र तत्प्रतीतेः । अत एव नाश्रयसादृश्यासंसर्गा-**

---

कूटं हेतूकृत्य द्रव्यादिसमुदायभिन्नत्वं सादृश्ये साधयितुकामोऽग्रे प्रत्येकपदार्थभेदान् साधयितुमुपक्रमते, 'तच्चेति, 'तच्च' सादृश्यञ्च इत्यर्थः, 'गुण-कर्म्मवृत्तित्वात्' इति वैकल्पिको हेतुः, तथाच गुणवृत्ति-त्वात् कर्म्मवृत्तित्वाच्च इत्यर्थः । न च आधेयत्वादिसम्बन्धस्य वृत्त्य-नियामकत्वेऽपि कालिकसम्बन्धेन द्रव्यादेर्गुण-कर्म्मवृत्तित्वात् व्यभिचार इति वाच्यं । तदन्यसम्बन्धेन वृत्तित्वस्यैव हेतुत्वात् ।

केचित्तु 'वृत्तित्वात्' समवेतत्वात्, इत्याहुः, तन्मन्दं सादृश्यस्य समवेतत्वे मानाभावेन स्वरूपासिद्धेः ।

शङ्कते, 'न चेति, 'सदृशाश्रयत्वादेवेति सदृश आश्रयो यस्य इति व्युत्पत्त्या सदृशाश्रयवृत्तित्वादेवेत्यर्थः, 'तत्र' गुण-कर्म्मसादृश्य-स्थले, 'व्यवहार इति, तथाहि गोरूपसदृशं गवयरूपं गोगमनसदृशं गवयगमनमित्यादौ गोसदृशवृत्तित्वमेव विषयः तथाच सादृश्ये गुण-कर्म्मवृत्तित्वाभावादुक्तानुमाने स्वरूपासिद्धिरिति भावः । 'आश्र-यवैसादृश्येऽपि आश्रयस्य सादृश्याभावेऽपि, 'तत्प्रतीतेः' तस्य प्रतीति-र्यत इति व्युत्पत्त्या तद्व्यवहारादित्यर्थः । तथाच गोरूपसदृशमश्वरूपं इत्यादिव्यवहारो न स्यात् अश्वे गोसादृश्याभावात् इति भावः ।

---

(१) सदृशाश्रयवृत्तित्वादेवेति ख० ।

ग्रहात् सः, बाधकाभावादविशेषेण वैपरीत्यसम्भवाच्च। नापि सामान्यं, तद्धि न सर्वेष्वन्येकमनभ्युपगमात् सुसदृश-मन्दसदृशव्यवहारानुपपत्तेश्च। अथ विजातीयत्वे सत्यवयव-गुण-कर्मवृत्तिभूयःसामान्यं तत्, अत-

---

नन्वश्वे गोसादृश्याभावेऽपि तदसंसर्गापहास्ताद्दृशव्यवहारः स्यात् इत्याशङ्क्य निषेधति, 'अत एवेति वक्ष्यमाणदोषादेव, 'स.' तादृशव्यवहारः, 'बाधकाभावात्' गुण-कर्मणोः सादृश्यसत्त्वे बाधकाभावात्। ननु बाधकासत्त्वेऽपि साधकविरहादेव तयोर्न सादृश्यसिद्धिरित्यत आह, 'अविशेषेणेति साधकविरहस्य तुल्यत्वेनेत्यर्थः, 'वैपरीत्यसम्भवाच्चेति गुण-कर्मणोरेव सादृश्यं द्रव्ये तदभाव इति कथं न रोचयेरिति भावः। गोसदृशो गवय इत्यादिव्यवहारस्य गोरूपसदृशरूपाश्रयत्वविषयकत्वादेवंकथ्यत्वासम्भवादिति भावः। सामान्यभेदमपि तत्र साधयति, 'नापीति, 'तद्धि' सादृश्यं हि, अनभ्युपगमे हेतुमाह, 'सुदृशेत्यादि, तथाचानेकावृत्तित्वमेव तत्र सामान्यभेदसाधको हेतुरिति भावः। वस्तुतस्तु प्रत्याश्रयभिन्नत्वरूपहेतुरेव एतत्प्रतिपाद्यः अन्यथा समवायाभावयोर्भेदसाधकहेत्वनुक्त्या न्यूनत्वापत्तेः। द्रव्यभेदसाधकहेतुनैव विशेषभेदसिद्धिः सामान्यभेदसाधकहेतुना तु समवायाभावभेदसिद्धिरिति हेत्वन्तरानुसन्धानानपेक्षणात्तन्नोक्तं।

इदानीं मीमांसकः स्वपक्षं निर्व्यूढं कृत्वा विपक्षपक्षानुपन्यस्य दूषयति, 'अथेति, तथाच स्ववृत्त्यसाधारणधर्मशून्यत्वे सति अवयवगुण-कर्मवृत्तिभूयःसाधारणधर्मवत्त्वं सादृश्यं इति पर्यवसितं,

एव दूरस्थे प्रतियोगिनि भूयःसामान्याज्ञानान्न तथा सादृश्यप्रत्ययः वनं प्रासादा इतिवत् बहुत्वस्य समुदायत्वस्य वैकल्पत्वादेकं सादृश्यमिति[१] धी-प्रयोगौ अन्यथा वनाद्यपि अर्थान्तरं स्यात्, सामान्यस्य बहु-

---

क्वचिदवयवसाम्यात् क्वचिद्रूपादिसाम्यात् क्वचित् क्रियासाम्यात् सादृश्यप्रतीतिर्न भवति किन्तु एतत्त्रितयसाम्यादेव इति धर्म्मिदृष्टान्तविशेषणं, धर्म्मिणि तादृशधर्म्मवत्त्वं स्वाश्रयाश्रयत्वसम्बन्धेन बोध्यं तादृशैकधर्म्मवत्त्वेऽपि न सादृश्यमिति भूयस्त्वनिवेशः। एकनिष्ठासाधारणधर्म्मस्यापरत्रासम्भवात् साधारणत्वनिवेशः। अत्र युक्तिमप्याह, 'अत एवेति, सादृश्यस्य एतादृशरूपत्वादेवेत्यर्थः, 'दूरस्थे' असन्निकृष्टे, 'प्रतियोगिनि' गवादौ, 'न तथा सादृश्यप्रत्ययः' न निरुक्तसादृश्यलौकिकप्रत्यक्ष इत्यर्थः। ननु तस्य भूयःसामान्यरूपत्वे एकं सादृश्यमिति प्रत्ययो व्यवहारश्च न स्यादित्यत आह, 'वनं प्रासादा इतिवदिति, 'समुदायत्वस्य' समुदायत्वरूपस्य, 'वैकल्प्यात्' उपाध्यत्वात् तद्विषयत्वेनाविवक्षितत्वादिति यावत्, 'प्रयोगः' व्यवहारः, अविवक्षितत्वे दृष्टान्तः 'प्रासादा इतिवदिति, एकत्वविशिष्टवने बहुत्वविशिष्टप्रासादाभिन्नत्वान्वयासम्भवात् यथा प्रासादादेर्बहुत्वमविवक्षितं तथात्रापीति भावः।

ननु तत्र बहुत्वं विवक्षितमेव इति दृष्टान्तासिद्धिरित्यत आह, 'अन्यथेति तत्र बहुत्वस्य विवक्षितत्वे, 'अर्थान्तरं' प्रासादाभेदान्वयानिरूपकं, 'स्यादिति, एकस्मिन् बहुत्वस्य बाधितत्वादिति भावः।

---

(१) सामान्यमितीति ख॰ ।

त्वाल्पत्वाभ्यां सुसदृश-मन्दसदृशव्यवहारः, तदुच्यते, "सामान्यान्येव भूयांसि गुणावयव-कर्मणाम्। भिन्न-प्रधानसामान्यव्यक्तं सादृश्यमिष्यते"॥ इति, न, साजात्येऽप्यरविन्दद्वयवत् सजातीयावयवादिशून्ये गुणादौ

---

ननु उक्तधर्म्माणां सादृश्यत्वे सुसदृश-मन्दसदृशव्यवहारो न स्यादत-स्तमप्युपपादयति, 'सामान्यस्येति, उक्तधर्म्माणां सादृश्यरूपत्वे भट्ट-कारिकामपि प्रमाणयति, 'तदुच्यत इति, तदर्थस्तु 'गुणावयव-कर्म्मणां', 'भूयांसि सामान्यान्येव' अनेके साधारणधर्म्मा एव, 'भिन्नप्रधानसामान्यव्यक्तं' प्रतियोगिवृत्त्यसाधारणधर्म्मभिन्नासाधारण-धर्म्ममिलितं प्रतियोग्यवृत्त्यसाधारणधर्म्मविशिष्टमिति यावत्, तथाच तद्वृत्त्यसाधारणधर्म्मवत्त्वमेव तद्वैजात्यमिति भावः। उद्देश्य-विधेय-भावेनान्वयस्थले उद्देश्यगतलिङ्ग-सङ्ख्ययोरविवक्षितत्वात् 'इष्यते' इत्येकवचनं। दूषयति, 'नेति, 'साजात्येऽपि' वैजात्यविरहेऽपि इत्यर्थः, 'अरविन्दद्वयवत्' सदृशं पङ्कजद्वयमित्यादाविवेत्यर्थः, तथाच वैजात्यनिवेशे तत्र सादृश्यप्रत्ययो न स्यादिति भावः। ननूक्तस्थले असाधारणधर्म्मा न पद्मत्वं तस्य व्यक्त्यन्तरसाधारणत्वात् किन्त्विदन्त्व-मेव इति तत्र वैजात्यमस्त्येव इत्यतो दोषान्तरमाह, 'सजातीयेति, 'अवयवादीत्यादिपदाद्गुण-कर्म्मपरिग्रहः, अवयवादिगतसाधारण-धर्म्मशून्ये इत्यर्थः, 'गुणादावित्यादिपदात् कर्म्मपरिग्रहः। ननु गुणे कर्म्मणि च सदृशाश्रयत्वादेव तत्प्रत्यय इत्यत आह, 'जातौ

जातौ च सदृशप्रत्ययात्[१] विसदृशयोः करभ-रासभयोस्तत्सत्त्वाच्च । नापि धर्म्यन्तरे धर्म्यन्तरवृत्तिधर्मबाहुल्यम्, असाधारणधर्मशून्यत्वे सति तद्गतभूयोधर्मवत्त्वं वा, स्वनिष्ठात्यन्ताभावप्रतियोगिधर्मसमानाधिकरण-

---

चेति, गुण-कर्मगतजातौ चेत्यर्थः। 'सदृशेति धर्मपरो निर्देशः, तथाच सदृशत्वप्रत्ययादित्यर्थः, क्वचित्तथैव पाठः। ननु जातौ तत्प्रत्ययस्य सादृश्याश्रयकत्वमेव विषयइति यद्युच्यते तदाप्याह, 'विसदृशयोरिति, विसदृशावयवादियुतयोरित्यर्थः, 'करभः' करिशिशुः, "करभः करिशावक" इत्यमरकोषात्। तयोरवयवादीनामत्यन्तवैलक्षण्येऽपि रासभोऽयं करभ इव खादति इत्यादौ यत्किञ्चित्क्रियासाम्येऽपि सादृश्यव्यवहारात् भवन्मते तदनुपपत्तेः गुणादित्रयाणां साम्याभावादिति भावः। तथैवापरकल्पानपि दूषयति, 'नापीति, 'धर्म्यन्तरइति स्वभिन्नभिन्नं स्ववृत्तिधर्मबाहुल्यमित्यर्थः, स्वभिन्नभिन्नत्वञ्च स्वाश्रयाश्रयत्वसम्बन्धेन, स्वस्मिन् स्वसादृश्यवारणाय धर्मे स्वभिन्नवृत्तित्वनिवेशः। 'असाधारणेति तद्वृत्त्यसाधारणधर्मशून्यत्वे सति तद्गतभूयोधर्मवत्त्वमित्यर्थः, स्वस्मिन् स्वसादृश्यवारणाय सत्यन्तं। 'स्वनिष्ठेति, स्वस्मिन् स्वसादृश्यवारणाय धर्मे प्रतियोगित्वं। परस्पराधिकरणधर्माणां कुत्राप्यसत्त्वात् समानाधिकरणत्वं धर्मविशेषणं, तादृशयत्किञ्चिद्धर्मवत्त्वेऽपि सादृश्याव्यवहारात् भूयस्त्वनिवेशः। कल्प-

---

(१) सदृशत्वप्रत्ययादिति ख० ।

भूयोधर्मवत्त्वं वा, त्रिचतुःपञ्चादिभेदेन भूयस्त्वस्याननुगमात्[1]। न च कपिञ्जलवन्त्रित्वपर्य्यवसन्नं, विसदृशयोरपि हस्ति-मशकयोः सादृश्यप्रसङ्गात्। तदुक्तम्। "एवं जाति-गुण-द्रव्य-क्रियाशक्तिषु धर्मतः। एकैकद्वित्रिसाधर्म्यभेदाद्देकत्र चित्रता" इति॥ अथ व्यावर्त्तकधर्मापेक्षया तद्गतधर्मबाहुल्यं सादृश्यं,

---

चयमेकदैव दूषयति, 'त्रिचतुरित्यादि, 'अननुगमादिति। प्रकृते, 'न चेति, 'कपिञ्जलवदिति, "कपिञ्जलानालभेत" इति श्रुतौ बहुवचनस्य चतुष्ट-पञ्चत्वादिग्रहणे "मा हिंस्यात् सर्व्वाभूतानि" इति श्रुतौ विरोधभञ्जनाय भूतपदस्य कपिञ्जलातिरिक्तपरतया तथानेकभेदनिवेशे गौरवापत्तिरिति बहुवचनस्य त्रित्वे शक्तिरवश्योपेया तथाचापि भूयस्त्वं त्रित्वमेवेति भावः। 'प्रसङ्गादिति, शुण्डादिमत्त्वस्य मशकेऽपि सत्त्वादिति भावः। द्विविधधर्म्मसाम्येऽपि न सादृश्यमित्यत्र प्रमाणमाह, 'तदुक्तमिति, 'एवमित्यादि, 'एवं' भूयस्त्वस्य सादृश्यघटकत्वे, तथाच जात्यादिरूपस्वगतधर्म्मानपेक्ष्य एकैकद्वित्रिसाधर्म्यवैलक्षण्यात् यत्र तयोरेकस्मिन् वैलक्षण्यं तत्र न सादृश्यमिति भावः। प्रकृते, 'अथेति, 'व्यावर्त्तकेति असाधारणेत्यर्थः, 'तद्गतधर्म्मेति तद्गतसाधारणधर्म्मेत्यर्थः। ननु बाहुल्यस्याननुगमाल्लक्षणघटकत्वासम्भवः

---

(१) भूयस्त्वस्याननुगतत्वादिति ख॰।

बाहुल्यञ्च त्रिचतुरादिष्वनुगतं, हस्ति-मशकयोस्तु बहु व्यावर्त्तकं साधारणन्त्वल्पमेत एव किञ्चिद्भेदाधिष्ठानं सादृश्यमुच्यते इति चेत्, न, व्यावर्त्तकसमसङ्ख्येनाल्पेनागणितेनापि धर्म्मेण सादृश्यव्यवहारात् ।

किञ्च सामान्यान्याश्रयभेदेनाभिन्नानि भवन्ति, सादृश्यन्तु भिन्नम्, सामान्यं निष्प्रतियोगिकं तदनि-

---

इत्यत आह, 'बाहुल्यञ्चेति, 'अनुगतमिति, तथाच बहुत्वमिति व्यवहारविषयत्वमेव बाहुल्यमिति भावः । पूर्व्वलक्षणस्यमशकातिप्रसङ्गं वारयति, 'हस्ति-मशकयोस्त्विति, 'व्यावर्त्तकमिति, हस्तित्व-मशकत्वादिरूपमिति शेषः, 'साधारणमिति, गुणवत्त्वादिरूपमिति शेषः.। उपसंहरति, 'एत इति स्वल्पसाधारणधर्म्मापेक्षया बहुलसाधारणधर्म्मा एवेत्यर्थः, 'किञ्चिद्भेदाधिष्ठानं' प्रतियोगिभेदसहकृतं । तथाच तद्भिन्नत्वे सति स्वल्पसाधारणधर्म्मबहुलतद्गतभूयोधर्म्मवत्वं तन्निरूपितस्वनिष्ठसादृश्यमिति पर्य्यवसितं । दूषयति, 'नेति, 'समसङ्ख्येनेत्यस्य 'धर्म्मेणेत्यत्रान्वयः, एवमग्रेऽपि । ननु गणनभ्रान्तिवशात्तथ व्यवहार इत्यत-आह, 'अगणितेनापीति, 'व्यवहारादिति, तथाच अगणनस्थले बाहुल्याज्ञानात् तन्मते तद्व्यवहारो न स्यादिति भावः । ननु व्यवहारविषयत्वरूपबाहुल्यं न गणनसापेक्षं संख्याया एव तत्सापेक्षत्वादिति यदि ब्रूयात्तदाप्याह, 'किञ्चेति, 'भिन्नमिति, 'स्वाश्रयमित्यादिः, तथाच सामान्यवि-

रूप्यञ्च। सादृश्यन्तु सप्रतियोगिकं तद्धीव्यङ्ग्यञ्च। अथ भेदे सति तद्गतभूयःसामान्यवत्त्वं सादृश्यं भेदश्च प्रत्याश्रयमन्यः सप्रतियोगिकश्चेति चेत्, तर्हि सादृश्यस्य भेदघटितत्वेन सावधित्वे तस्मात् सदृश इति स्यात् न तु तेन तस्य वा सदृश इति स्यात्। न च सादृश्यस्यापि सप्रतियोगिकत्वेन तस्मात् सदृश इति स्यात्, सावधौ हि तथा प्रतीति-प्रयोगौ न तु प्रतियोगिनि, अभावेऽपि घटादिति[1] प्रतीतिप्रसङ्गात्। अपि

---

विरुद्धधर्मवत्त्वात् तद्भेदसिद्धौ सामान्यरूपता तस्य न सम्भवतीति भावः। एवमग्रेऽपि, 'तदनिरूप्यञ्चेति यद्गतसामान्यं तदनिरूप्यञ्चेत्यर्थः, विरुद्धधर्मान्तरमपि दर्शयति, 'तद्धीव्यङ्ग्यञ्चेति, 'चकारात्तन्निरूप्यत्वसंग्रहः। प्रकृते, 'अथेति, इष्टापत्तिमाशङ्क्य निषेधति, 'न चेत्यादि, 'तथा' पञ्चम्यर्थविषयकेत्यर्थः, 'प्रयोगः' व्यवहारः, 'न त्विति न तु प्रतियोगिविषयकमात्रे पञ्चम्यर्थविषयकत्वमित्यर्थः। प्रतियोगित्वस्य पञ्चम्यर्थत्वे दोषान्तरमाह, 'अभावेऽपीति अत्यन्ताभावेऽपीत्यर्थः। अत्यन्ताभावविषयकप्रतीतेरपि पञ्चम्यर्थप्रतियोगित्वविषयकत्वापत्तेरिति यावत्। 'घटादितीति भूतले घटादभाव इति प्रतीतिप्रसङ्गादित्यर्थः। विशेषणांशमादाय दोषमुद्भाव्य विशे-

---

(१) घटान्नेतीति ख॰।

च तद्धर्मवत्त्वं यदि सादृश्यं तदा तत्-तद्भिन्नतयोः सङ्करः स्यात्[१] तद्धर्मवत्ता हि तत्ता तदन्या च तद्वत्ता, यदि च तत्त्वैव तद्वत्ता तदा तदेव तद्वदिति स्यात्। तथाच तद्धर्मवत्ताप्रत्यभिज्ञानवत् सोऽयमिति स्यात्, न तु तद्वदयमिति। एवं तद्वत्तैव हि तत्तेति गवयेऽपि गोबुद्धि-व्यपदेशौ स्याताम् गोगतसामान्ययोगित्वेन गोवत्ता-

---

स्यांप्रमादाद्यापि तमुद्भावयति, 'अपि चेति, 'तत्तद्भिन्नतयोः' तत्ता-तद्भिन्नतयोरित्यर्थः, द्वन्द्वात्पर इति न्यायात्, 'सङ्करः स्यात्' एकत्रोभयसत्त्वं स्यात्, अत्र हेतुमाह, 'तद्धर्मेति तद्गतधर्मेत्यर्थः। सादृश्यस्यान्यरूपत्वे दोषमाह, 'तदन्येति भेदविशिष्टतद्गतधर्मवत्ताभिन्ना, 'तद्वत्ता' तत्सादृश्यं, 'तत्त्वैव' तथापि, 'तद्वत्ता' तत्सादृश्यं, तस्य भेदाघटितत्वादिति भावः। ननु तत्र तद्वत्तात्वे का क्षतिरित्यत आह, 'तदेति, 'तदेव' तदपि, 'इति स्यात्' इति व्यवहारः स्यात्। ननु तत्र तत्त्वेऽपि व्यवहारनियामकोभेदोऽवक्तव्य इत्यत आह, 'तथा चेति तयोरक्तौ चेत्यर्थः, क्वचिदेवं पाठः स एव सम्यक्। 'इति स्यात्' वस्तुगत्या सादृश्यवति इति प्रतीतिः स्यात्, आपत्ति-मुक्त्वा अनुपपत्तिमाह, 'न त्विति, 'तद्वदयमितीति, वस्तुगत्या सादृश्यवतीत्यादिः, 'इतीति इत्येवेत्यर्थः। तद्वत्तायास्तत्तारूपत्वे दोषमाह, 'एवमिति, कुत इत्याकाङ्क्षायामाह, 'गोगतेत्यादि, 'गोवत्ताश्रयत्वात्' गोत्ववत्तायास्तत्तायास्तदाश्रयत्वादित्यर्थः। पूर्व्वा-

---

(१) सङ्करप्रसङ्गादिति ख०।

